श्री ।




शास्त्रमुक्तावळी, ५

श्रीशोटचूर्—श्रीविजयराघवाचार्यविरचित

# शतकोटिमण्डनम् ।

श्रीकाञ्ची प्रतिवादिभयङ्कर अनन्ताचार्येण
परिशोधितम् ।

श्रीसुदर्शनमुद्राक्षरशालायां
अमुद्र्यत ।

श्रीकाञ्ची ।



१९१०

श्रीः ।

श्रीहयग्रीवाय नमः ।

श्री शोहत्तूर-विजयराघवाचार्य विरचितम्

# ॥ शतकोटिमण्डनम् ॥

रघुवीरपदाम्भोजयुगलध्यानधारया ।
साधयेऽर्थानभिमतान् यद्वेणोस्त्रथमवच्छिला ॥
ग्रन्थेऽस्मिन् शतकोटिनामनि गुरूत्तंसैः कृते दोषदृक्
कश्चित्तेन निरस्ततामुपगतः सद्युक्तिभिस्सोऽधुना ।
अन्यं कञ्चन तत्र दोषघटनायासार्थितं वीक्ष्यत
द्भङ्गार्थं विजयादिराघवपदाख्येयः प्रवृत्तः पुनः ॥
शतकोटिविदूळनेच्छा पुण्यजनानां हि निष्फलाप्युचिता ।
उन्मूलनं तदेषां लीलातो विजयराघवार्यस्य ॥
शिष्याणामथवान्येषां वादौत्सुक्यवतां कृते ।
क्वचिद्विचित्ररचना विजयेन विरच्यते ॥

सत्प्रतिपक्षलक्षणे वह्न्यभाववह्न्यभावव्याप्यव्याप्योभयवद्ध्रदेऽतिव्याप्तेराश्रयैकेन विशिष्टान्तराघटितत्वेन वारणम्। तच्च न यथा श्रुतम्, जनकतामात्रघटितत्वे वह्न्यभावव्याप्यवह्न्यभावव्याप्यव्याप्यवद्ध्रदे, प्रतिबन्धकतामात्रघटितत्वे ह्रदस्समानाधिकरणजलाभाववानित्यत्र सत्प्रतिपक्षेऽव्याप्तेः। उभयघटितत्वे उक्तातिव्याप्तेः। जनकतायां विशिष्टान्तरयत्किञ्चिद्धर्मावच्छिन्नविषयकत्वानवच्छिन्नत्वनिवेशे वह्न्यभावव्याप्यव्याप्यवह्न्यभाववद्ध्रदेऽतिव्याप्तेः। परन्तु विशिष्टान्तरयत्किञ्चिद्धर्मावच्छिन्नविषयकत्वानवच्छिन्नत्वं सत्यन्तप्रतिबन्धकतायामेव निवेशनीयमिति शतकोटिमध्ये गुरुचरणाः।

अत्रान्ये—एवं सति प्रतिहेतुव्यापकसाध्याभावसमानाधिकरणप्रतिहेतुमत्पक्षरूपसत्प्रतिपक्षाव्याप्तिः, प्रतिहेतुव्यापकसाध्याभाववन्निरूपितव्याप्तिप्रतिहेतुमत्पक्षरूपविशिष्टान्तरघटितत्वात्। तथा हि—हेतुव्यापकसाध्याधिकरणनिरूपितहेतुतावच्छेदकसम्बन्धावच्छिन्नाधेयतावगाहिन एव परामर्शस्यानुमितिजनकता, अन्यथा हेतुतावच्छेदकसम्बन्धेन साध्यवदवृत्तिहेत्वादेः मतभेदेनासाधारण्यविरोधरूपस्य दोषत्वानिर्वाहात्; यद्यपि साध्यासमानाधिकरणहेतुरूपोक्तदोषनिश्चयस्य पक्षे हेतुमत्तानिश्चयसहितस्य साक्षादनुमितिप्रतिबन्धकत्वमस्ति, तथापि हेतुनिष्ठसाध्यासामानाधिकरण्यव्याप्यस्य साध्यनिष्ठहेत्वसामानाधिकरण्यादेश्च दोषत्वानिर्वाहः, न हि साध्यनिष्ठहेत्वसामानाधिकरण्यदर्शनं पक्षे हेतुमत्ताज्ञानसाहित्येन साध्यवत्ताज्ञानविरोधि? स्पष्टं चेदं मधु-

रानाधीयविरोधमन्यादौ ; कश्चित्तादात्म्येन जनकतावच्छेदककोटौ उक्तसम्बन्धस्यानावश्यकत्वप्रतिपादनं मतान्तराभिप्रायेण, अन्यथाऽसाधारण्यलक्षणाक्रान्तविरोधाप्रसङ्गः विभागानुपपत्तेः; इत्थञ्च उक्ताव्याप्तिः एवं व्याप्त्यंशे निश्चयत्वानिवेशे लाघवात् व्याप्तिविशिष्टवैशिष्ट्यावगाहिपरामर्शत्वस्यैवानुमितिजनकतावच्छेदकतया तस्यैव दोषत्वात्, तत्र तद्घटितरूपस्य विशिष्टान्तरत्वसम्भवेऽव्याप्तिः। एवं जलव्यापकवह्न्यभावकालीनह्रदो वह्निमानित्यत्र वह्न्यभावव्याप्यजलवत्तादृशह्रदाव्याप्तिः। न च सामान्यलक्षणे प्रतिबन्धकतायामेव तथा निवेशात् उक्तदोषो दुर्वार इति वाच्यम्, व्यापकत्ववैशिष्ट्यं हि प्रतिबन्धकतायां न स्वरूपसम्बन्धमात्रेण, अपि तु स्वाश्रयजनकताव्यापकत्वस्वरूपान्यतरसम्बन्धेन, अत उक्तदोषाभावात्। तस्माच्छलकोट्युक्तं न सम्भवति, परन्तु जनकतायामेव तन्निवेश्यम्। न च वह्न्यभावव्याप्यव्याप्यवह्न्यभाववद्ह्रदाव्याप्तिरिति वाच्यम्, एकरूपेण जनकतामभ्युपेत्य तत्र प्रतिबन्धकताव्याप्यत्वानिवेशेनोक्तदोषोद्धारात्। अत एव वह्न्यभाववद्वह्न्यभावव्याप्यव्याप्यवत्कालीनह्रदो वह्निमानित्यत्र न सत्प्रतिपक्षांशाव्याप्तिः, नानासम्बन्धावगाहितदभाववद्बुद्धिसमत्वानामयानामधिकरूपेण जनकत्वाभ्युपगमेन तत्त्वावच्छेदकधर्मतया पक्षकोटिप्रविष्टत्वेऽपि पक्षतावच्छेदककोटिप्रविष्टतत्सम्बन्धावगाहितत्सम्बन्धावगाहिज्ञानेऽपि जनकत्वसत्त्वाच्च दोष इत्याक्षिपन्ति।

अत्रेदं चिन्त्यते—यस्तु एकरूपेण जनकतामभ्युपेत्य तत्र प्रतिबन्धकताव्याप्यत्वनिवेशेन जनकताया यत्किञ्चिद्विशिष्टान्तरविषयकत्वानवच्छिन्नत्वनिवेशेऽपि न वह्न्यभावव्याप्यव्याप्यवह्न्यभाववद्ह्रदाव्याप्तिरिति; तन्न, घटः तत्तत्सम्बन्धेन गगनाभाववद्वृत्तिसत्कालीनगगनवानित्यत्र तादृशगगनाभावव्याप्याभावव्याप्यप्रमेयत्ववद्देशान्तर्व्याप्तेः, प्रमेयत्वव्यापकत्वातिरिक्तभागस्य विशिष्टान्तरत्वसम्भवेन प्रतिबन्धकतायां तन्निवेशपक्षे तदभावात्।

अथ तथा निवेशे व्यापकताघटितसत्प्रतिपक्षाव्याप्तिः इत्यतीतितमयोऽस्यां स्वेनैव वक्ष्यमाणा दुर्वारा। न च स्वावच्छिन्नविषयकत्वावच्छिन्नविरोध्यनुमितिजनकतासम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदकत्वस्वावच्छिन्नविषयकत्वावच्छिन्नप्रतिबन्धकतावत्त्व उभयसम्बन्धावच्छिन्नस्वनिष्ठप्रतियोगिताकाभावकज्ञानीयत्वस्य विशिष्टान्तरविषयितायां निवेशादेवोक्ताव्याप्तिनिराकरणम्, प्रमेयत्वविशिष्टसत्प्रतिपक्ष-

वारणाय प्रथमसम्बन्धः, विशिष्टवैशिष्ट्यावगाहिबुद्धिजनकतामादाय उक्ताव्याप्तिस्स्यादिति तत्र विरोध्यनुमितिनिरूपितत्वनिवेशः; वह्निव्याप्यधूमवत्पर्वतकालीनजलस्य प्रतिहेतुत्वे तद्दोषवारणाय विरोधे प्रकृतानुमितिनिरूपितत्वं निवेश्यम् ; जनकतायां स्वावच्छिन्नविषयकत्वावच्छिन्नत्वनिवेशे ह्रदो वह्निधूमोभयवानित्यत्र वह्न्यभावव्याप्यधूमाभावव्याप्यवद्ध्रदाव्याप्तिः स्यात्, तन्निवेशे तस्य स्वानवच्छेदकविषयताशून्यत्वसम्बन्धेन स्वावच्छिन्नविषयकत्वव्यापकत्वाभावकतया अदोषात् ;

द्वितीयसम्बन्धनिवेशात्तु तादृशविशिष्टान्तराप्रसिद्धिः, तस्य स्वसम्बन्धत्वाय तत्र स्वावच्छिन्नविषयकत्वावच्छिन्नत्वनिवेश इति वाच्यम् ;—तथा निवेशे वह्न्यभावव्याप्यव्याप्यवह्न्यभाववद्ध्रदगताव्याप्तेः। न च प्रथमसम्बन्धे स्वावच्छिन्नविषयकत्वावच्छिन्नजनकताया प्रकृतानुमितिविरोध्यनुमितिनिरूपितत्वस्य प्रकृतानुमितिनिरूपितप्रतिबन्धकताविशिष्टप्रतिबन्धकतावच्छेदकविषयत्वावच्छिन्नानुमितिनिष्ठजन्यतानिरूपितत्वरूपस्य विवक्षणेन निरुक्तसकलदोषोद्धारः ; वैशिष्ट्यं स्वसमानाधिकरणत्वादिभेदद्वयतादात्म्योभयसम्बन्धेन, स्वाधिकरणत्वं स्वावच्छेदकविषयित्वावच्छिन्नानुमितिनिष्ठजन्यतानिरूपितजनकतासम्बन्धेन, भेदप्रतियोगितावच्छेदकत्वं स्वनिरूपितप्रतिबध्यतावच्छेदकावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतासम्बन्धेन, तादात्म्यसम्बन्धनिवेशात् बाधप्रतिबन्धकतायां निष्टस्य सत्प्रतिपक्षप्रतिबन्धकताया सत्त्वेऽपि नोक्तदोषः ; एतेन वह्न्यभाववत्त्वेनाऽभाववत्कालीनतद्धूमाभावव्याप्यवह्न्यभावव्याप्यवद्ध्रदे ह्रदपक्षकवह्निसाध्यकस्थले अनुमितौ प्रकृतानुमितिविरोधित्वनिवेशेऽप्यतिव्याप्तिरिति निरस्तम् ; यद्यपि विशिष्य दल एव तथा निवेश्य जनकतायां विशिष्टान्तरविषयकत्वानवच्छिन्नत्वनिवेश एवोचितः, तथापि तथानिवेशे सत्यन्तवैयर्थ्यं स्यादिति तदुपादानम्, स्फुटीभविष्यति चेदमुपरिष्टादिति वाच्यम् ;—एवमपि घटः तत्तत्सम्बन्धेन गगनाभाववद्भाववद्वृत्तिमत्कालीनगगनाभावप्रतियोगिमत्कालीनगगनाभाववद्—भावविशिष्टवत्कालीनगगनवानित्यत्र तादृशगगनाभावव्याप्याभावव्याप्यप्रमेयवद्घटे, एवं नत्वं सामानाधिकरण्याभाववदित्यत्र सामानाधिकरण्यव्याप्यजलव्याप्यवज्जले, एवं जलवद्ध्रदो वह्निमानित्यत्र वह्न्यभावव्याप्यजलव्याप्यवत्तादृशह्रदे चातिव्याप्तेः; तत्र प्रथमसम्बन्धस्य व्यधिकरणत्वासम्भवादिति चेन्न—प्रतिबन्धकतायां प्रतिबन्धकतावैशिष्ट्यं नोक्तसम्बन्धेन, किन्तु स्ववृत्तिप्रकारताविशिष्टत्वसम्बन्धेन, वैशिष्ट्यं स्वसमानाधिकरणत्वादिभेदद्वयसम्बन्धेन, स्वाधिकरणत्वं स्वविशिष्टविषयत्वसम्बन्धेन, प्रकारतायां प्रतिबन्धकतावृत्तित्वं स्वसमानाधिकरणत्वादिभेदद्वयसम्बन्धेन, प्रकारता

वैशिष्ट्यञ्च निश्चये स्वविशिष्टाधिकरणताविशिष्टत्वसम्बन्धेन, अधिकरणतायां स्ववैशिष्ट्य स्वावच्छिन्नप्रतियोगिताकभेदनिरूपितत्वसम्बन्धेन, अधिकरणतावैशिष्ट्यञ्च स्वविशिष्टत्वस्वविशिष्टनिश्चयविशिष्टत्वोभयसम्बन्धेन, निश्चये स्ववैशिष्ट्यञ्च स्वविशिष्टावच्छेदकताविशिष्टत्वसम्बन्धेन, स्ववैशिष्ट्य स्वाश्रयावच्छेदकतावच्छेदकधर्मावच्छिन्नव्यापकत्वविशिष्टस्वनिरूपकभेदप्रतियोगितावच्छेदकप्रकारतावच्छेदकसम्बन्धावच्छिन्नतादृशप्रकारतावच्छेदकावच्छिन्नप्रकारतानिरूपितविशेष्यतानिरूपितत्वस्वाश्रयत्वोभयसम्बन्धेन, अवच्छेदकतावैशिष्ट्य निरूपकतासम्बन्धेन, निश्चये निश्चयवैशिष्ट्य पुरुषणावच्छिन्नैककालवृत्तित्वसम्बन्धेन, निश्चये अधिकरणतावैशिष्ट्य स्वाश्रयावच्छेदकतावच्छेदकधर्मसम्बन्धावच्छिन्नप्रकारतानिरूपितस्वनिरूपकभेदप्रतियोगितावच्छेदकप्रकारतानिरूपितविशेष्यतावच्छेदकावच्छिन्नविशेष्यतानिरूपकत्वसम्बन्धेन, प्रतियोगितावच्छेदकत्वञ्च स्वनिरूपितप्रतिबध्यतावच्छेदकावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकताविशिष्टत्वसम्बन्धेन, वैशिष्ट्य स्वानवच्छेदकविषयताशून्यत्वसम्बन्धेन, तेन ह्रदो जलवद्ह्रदकालीनवह्निमानित्यस्य तादृशवह्न्यभावव्याप्यवह्न्यभाववज्जलकालीनह्रदे नातिव्याप्तिः, न वा ह्रदो वह्निमानित्यनेन जलवद्ह्रदव्याप्यवह्न्यभाववज्जलवति तादृशजलव्याप्यवति तादृशह्रदे वातिव्याप्तिः, इत्थञ्च निश्चये मुख्यविशेष्यताद्वयघटनेन विशेषणीया —स्वाधिकरणनिश्चय एव वा तत्प्रतिबन्धकतानवच्छेदकविषयताशून्यत्व विशेषणम्, भेदप्रतियोगितावच्छेदकत्वन्तु स्वरूपसम्बन्धेन, अधिकमग्रे वक्ष्याम, तस्याप्रतिबन्धकतायामेव तन्निवेशानुपपत्तिः । एतत्परिष्कारे प्रतियोगिवैयधिकरण्यघटितजलव्यापकवह्न्यभावसमानाधिकरणत्वतद्घटितजलव्यापकवह्न्यभावकालीनजलोभयवद्ह्रदानिव्याप्तिशङ्कानवकाश । जनकतायां तन्निवेशो घटपक्षके तन्माध्यकस्थले पूर्वोक्तातिव्याप्तिः । एव जल सामानाधिकरण्याभाववानित्यस्य च । एवं जलवद्ह्रदो वह्निमानित्यस्य चोक्तातिव्याप्तिर्दुर्वारा ॥

यत्तु यादृशविशिष्टविषयकनिश्चयविशिष्टत्वविषयताशून्ययादृशविशिष्टविषयकनिश्चयं प्रतिबन्धकतानतिरिक्तवृत्तितादृशविशिष्टद्वयानिषयत्वं तस्य विरोध्यनुमितौ निवेशाद्व्याप्तिव्याप्तिवारणमिति । तत्तुच्छम्—उक्तेये तथा निवेशे घटो गगनाभाववदभावत्वकालीनगगनवानित्यस्य सत्प्रतिपक्षाव्याप्ते । एवं अभाववृत्तित्वव्यापकवह्न्यभावकालीनवह्नेस्साध्यत्वे अभावस्य पक्षत्वे अभावनिष्ठाभावप्रतियोगित्वव्याप्यवत्तादृशवह्नौ चाव्याप्ते । तन्निवेशेऽपि वह्न्यभाववद्भावविशिष्टवह्निरूपितत्वञ्च कालीनवह्न्यभाववद

भाववन्निरूपितत्ववत्कालीनवह्निसाध्यकाधेयत्वपक्षकस्थले तादृशवह्निमद्वृत्त्यभाववद्वृत्तिमदाधेयत्वे, आधेयत्वपक्षकवह्न्यभाववत्त्वरूपसम्बन्धेनाभाववन्निरूपितत्ववत्कालीनवह्न्यभाववदभावविशिष्टवन्निरूपितत्ववत्कालीनवह्निसाध्यकस्थले तादृशवह्न्यभावाभाववद्वृत्त्यभाववद्वृत्तिमदाधेयत्वे चातिव्याप्तेः ।

यत्तु द्रव्यत्ववद्घटोभाववद्व्यापकजातित्वाभावकालीनजातित्ववानित्यत्र तादृशजातित्वाभावव्याप्यद्रव्यत्वाभाववद्वृत्तिमद्द्रव्यत्ववद्घटेऽतिव्याप्तेर्वारणाय सर्वमतएव विरोध्यनुमितौ विशिष्टव्याप्यघटितत्वं निवेशनीयमिति। तदसत्, तत्र हि द्वे प्रतिबन्धकते वर्तेते, एका द्रव्यत्वव्यापकविशिष्टजातित्वाभावविषयकनिश्चयविशिष्टद्रव्यत्ववद्घटविषयकनिश्चयत्वावच्छिन्ना, अपरा अभाववद्व्यापकसामान्यत्वाभावत्वावच्छिन्नविषयकनिश्चयविशिष्टाभावविशिष्टवत्तादृशपदत्वावच्छिन्नविषयकनिश्चयत्वावच्छिन्ना, अभावविशिष्टस्य व्याप्यत्वञ्च संयोगेन समवायेन वा, तत्राद्याया. घटमात्रावत्त्वाघटितविशिष्टात्मकविशिष्टान्तरविषयकनिश्चयत्वव्यापकत्वात् नानासम्बन्धावगाहितद्भाववद्वृत्तिमत्तानिश्चयानामेकरूपेण जनकतामभ्युपेत्य विशेष्यदलघटकजनकताव्यापकत्वस्य सत्यन्तघटकप्रतिबन्धकतायां निवेशेन द्वितीयायाश्च तदभावात् तत्रातिव्याप्तिविरहात् अस्माकं तद्विशेषणानावश्यकत्वात् । वस्तुतः वक्ष्यमाणरीत्या विशेष्यदलाभावादेव उक्तातिव्याप्तिवारणसम्भवात् उभेये विशिष्टव्याप्यघटितत्वविशेषणं अनर्थकमेव । एतेन तादृशसम्बन्धेन अभावविशिष्टव्यापकगगनाभावकालीनगगनसाध्यकघटपक्षकस्थले तादृशविशिष्टगगनाभावव्याप्यद्रव्यत्वाभाववद्वृत्तिमद्घटेऽतिव्याप्तिवारणाय तद्विशेषणमावश्यकम्, नानासम्बन्धावगाहिनिश्चयानां एकरूपेण जनकत्वस्येव प्रतिबन्धकत्वस्यापि तथा सम्भवादिति शङ्काप्यपास्ता । किञ्च जनकतायां विशिष्टान्तरविषयकत्वानवच्छिन्नत्वनिवेशो ह्रदो वह्निमानित्यत्र वह्न्यभावव्याप्यवत्त्वमेव ह्रदेऽतिव्याप्तिः ।

यत्तु जन्यतायां तादृशप्रतिबन्धकतावच्छेदकविषयित्वावच्छिन्नत्वस्थाने तादृशप्रतिबन्धकतावृत्तिरूपावच्छिन्नविषयकत्वावच्छिन्नत्वनिवेशान्नोक्तदोषः, वृत्तिश्च विशिष्टान्तरविषयकत्वानवच्छिन्नत्व-स्वावच्छिन्नविषयकत्वावच्छिन्नत्वोभयसम्बन्धेन, सर्वमतेऽप्येवं विवक्षणीयम्—अन्यथा घटकालीनवह्न्यभावाभाववद्वृत्तिमद्ध्रदेऽतिव्याप्तेः, तत्र हि घटकालीनवह्न्यभावाभाववद्वृत्तिमद्ध्रदे वह्न्यभावाभाववद्वृत्तिमद्ध्रदस्याघटकतया तस्य विशिष्टान्तरत्वासम्भवादिति । तच्चिन्त्यम्; घटकालीनवह्न्यभावाभाववद्वृत्तिमद्ध्रदे शुद्धस्य तस्याघटकत्वादेव तस्याप्रतिबन्धकत्वात्, तदवच्छेदकरूपान्तरस्य च तत्रासत्त्वात्, इत्थमते तदनावश्यकत्वात्, वह्निसामान्याभाववत्ताबुद्धौ महानसीयवह्निव्याप्यवत्तानिश्चयस्य प्रतिबन्धकत्वं यदतः कस्यचिद्घटकालीनेत्याद्युक्तनिश्चयस्य तद्रूपेण प्रतिबन्धकत्वस्य दृष्टत्वेऽपि सुन्दरवह्निमद्वह्निमत्कालीनपर्वतस्सुन्दरवह्न्यभाववानित्यत्र सुन्दरवह्निव्याप्यवत्तादृशपर्वताव्याप्तिप्रसङ्गश्च यस्य

केचित्तु- प्रतिबन्धकतायां विशिष्टान्तरविषयकत्वानवच्छिन्नत्वनिवेशे, उक्तसत्प्रतिपक्षविशेषेऽव्याप्तिवारणाय विशिष्टान्तरविषयितायां तत्प्रतिबन्धकताव्याप्यविरोध्यनुमितिजनकतानवच्छेदकत्वतत्प्रतिबन्धकतावच्छेदकत्वोभयाभावो निवेश्यते । मेयत्वविशिष्टसत्प्रतिपक्षवारणाय प्रथमदलस्य प्रतियोगितया निवेशः, विशिष्टवैशिष्ट्यावगाहिबुद्धिजनकतामादाय उक्ताव्याप्तिवारणाय तत्र विरोध्यनुमितीति । वह्न्यभावव्याप्यव्याप्यरूपप्रतिहेतुघटितसत्प्रतिपक्षसङ्ग्रहाय तत्प्रतिबन्धकताव्यापकत्वं जनकतायाः, सत्प्रतिपक्षसङ्ग्रहाय द्वितीयदलस्य तथा प्रवेशः, अन्यथाप्रसिद्धेः । अत्र जनकतावच्छेदकत्वं तद्वृत्तिभिन्नत्वं प्रतिबन्धकतावच्छेदकत्वमपि तद्वृत्तित्वम् । इत्थञ्च उभयाभावो विशिष्टान्तरधर्मएव निवेश्य. । तेन नैकत्र द्वयमिति रीत्या जायमानज्ञानीयविषयतामादाय तद्दोषतादवस्थ्यम् ।

न च बाधप्रतिबन्धकताव्याप्यतादृशजनकत्वाप्रसिद्ध्यैव बाधातिव्याप्तेर्वारणात् विशेष्यदलवैयर्थ्यम्, सामान्यलक्षणेऽप्युक्तसत्प्रतिपक्षसङ्ग्रहायैवं परिष्कारे बाधाव्याप्तिश्चेति वाच्यम्; स्वव्याप्यजनकतावृत्तित्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वस्ववृत्तित्वोभयसम्बन्धेन स्वाश्रयज्ञानाभाववत्त्वसम्बन्धेन प्रतिबन्धकताविशिष्टत्वस्य विशिष्टान्तरधर्मे निवेशादेवोक्तदोषवारणात् ।

यत्तु- जलव्यापकवह्न्यभावकालीनजलजलव्यापकवह्न्यभावसमानाधिकरणजलवद्ह्रदेऽतिव्याप्तिरिति । तन्न; जलव्यापकवह्न्यभावसमानाधिकरणेत्यत्र व्यापकतायाः प्रतियोगिवैयधिकरण्याघटितत्वे जलव्यापकवह्न्यभावसमानाधिकरणजलवद्ह्रदत्वेन विशिष्टान्तरसम्भवात्, तस्य तदघटितत्वे सत्यन्तप्रतिबन्धकताव्याप्यत्वस्य विशेष्यदलघटकजनकतायां निवेशादेव तद्वारणात् । वह्न्यभावादिधर्मिकाव्याप्यवृत्तित्वज्ञानकालीनस्य तादृशज्ञानस्याप्रतिबन्धकत्वात् प्रतियोगिवैयधिकरण्याघटितस्यैव हि सत्प्रतिपक्षत्वम्, तज्ज्ञानस्याव्याप्यवृत्तित्वज्ञानकालीनस्यापि प्रतिबन्धकतया तस्याः तादृशविशिष्टविषयकनिश्चयत्वव्यापकत्वाक्षतेः । न हि तदभावस्याव्याप्यवृत्तित्वमात्रेण तदभावनिरूपितप्रतियोगिवैयधिकरण्याघटितव्याप्तिविशिष्टवैशिष्ट्यावगाहिधियस्तद्विरोधित्वसम्भवः, येन तत्राव्याप्यवृत्तित्वज्ञानमुत्तेजकं भवेदिति ध्यायन्तु ।

यत्तु-सत्यन्तप्रतिबन्धकताव्याप्यत्वस्य विशेष्यदलघटकजनकतायां निवेशेऽपि एकरूपेण जनकत्वानभ्युपगमे वह्न्यभाववद्वह्न्यभावव्याप्यव्याप्यवत्कालीनह्रदो वह्निमानित्यत्र वह्न्यभावव्याप्यव्याप्यवत्तादृशह्रदेऽतिव्याप्तिरिति तद्वारणाय जनकताया व्याप्यत्वं स्वनिरूपितजन्यतावच्छेदकावच्छिन्नजन्यतानिरूपितजनकतासम्बन्धेन, प्रतिबन्धकताया व्यापकत्वं स्वनिरूपितप्रतिबध्यतावच्छेदकावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकताविशिष्टत्वसम्बन्धेन, वैशिष्ट्यं च स्वरूप-स्वावच्छेदकाभावप्रतियोग्युपहितत्वान्यतरसम्बन्धेन वक्तव्यम्, इत्थञ्च नोक्तसत्प्रतिपक्षोन्नायकातिव्याप्ति,

एकविधस्य वह्न्यभावव्याप्यव्याप्यस्यावच्छेदकधर्मतया निवेशो अन्यविधव्याप्यव्याप्यवत्ताज्ञानसाधारणजनकताव्यापकत्वस्य प्रतिबन्धकतायामसम्भवात्, सर्वविधस्यापि वह्न्यभावव्याप्यव्याप्यस्यावच्छेदकधर्मतया निवेशासम्भवात्, इत्थञ्च उक्तोभयवद्वृत्तेऽतिव्याप्तिरिति। तन्न; उक्तरीत्या परिष्कारेऽपि गगनाभाववद्वृत्तिमत्कालीनगगनाभाववत्प्रतियोगिमत्कालीनगगनाभाववद्भावविशिष्टत्वत्कालीनगगनसाध्यकघटपक्षकस्थले विशिष्टगगनाभावव्याप्यघटत्वाभाववद्वृत्तिमद्घटेऽतिव्याप्तेः। न च तदर्थमेवोक्तेयप्रतिबन्धकतायां विशिष्टान्तरविषयित्वाव्यापकत्वं निवेश्यमिति वाच्यम्, तथापि घटत्वव्यापकः तादृशगगनाभावः घटत्ववांश्च पक्ष इत्येतादृशज्ञानस्य प्रतिबन्धकतया तस्यास्तथात्वात्। एवं उक्तसाध्यतावच्छेदके गगनाभाववद्वृत्तिमत्कालीनत्वस्थाने गगनाभाववद्घटवृत्तिमत्कालीनत्वस्य घटकत्वे उक्तातिव्याप्तेर्दुर्वारत्वात्। तत्र च संयोगसमवायादिनानासम्बन्धेनाभावविशिष्टादीनां गगनाभावावच्छेदकत्वेन साध्यतावच्छेदककोटौ निवेशः कार्यः— तेन सम्बन्धघटेन नानासम्बन्धावगाहितद्वत्तानिश्चयानामप्रतिबन्धकत्वेऽपि न क्षतिः। न चैवं तद्दोषवारणायैव उक्तेये विशिष्टद्वयघटितत्वं सर्वमतेऽपि निवेशनीयमिति वाच्यम्, तदव्याप्त्याया प्रागेवोत्सारितत्वात्। परन्तु नानाधर्मसम्बन्धावगाहिनिश्चयानामेकरूपेण जनकत्वमभ्युपेत्यापि उक्तातिव्याप्तेर्वारयितुमशक्यतया वक्ष्यमाणरीत्यैव उक्तानुकूलदोषस्य वारणीयतया त्वदुक्तपरिष्कारस्यानवकाशतया केनचिद्रूपेणाऽपि उक्तोभयवद्वृत्तेऽतिव्याप्तेरप्रसक्तेः। अस्मत्परिष्कारे तु विशिष्टान्तरघटितत्वादेव उक्तोभयवद्वृत्तेऽतिव्याप्त्यनवतारात्। स्वरूपसम्बन्धेन जनकत्वप्रतिबन्धकत्वयोर्व्याप्यव्यापकभावनिवेशादेव प्रतियोगिवैयधिकरण्यघटितमलव्यापकवह्न्यभावसमानाधिकरणमलव्यापकवह्न्यभावसमानकालीनताद्रशमलवद्वृत्तेऽतिव्याप्तिरपि निरस्ता।

वस्तुतस्त्वदुक्तरीत्यनुसरणेऽपि विशेष्यदलघटकजनकतायां धर्मताविशिष्टत्वनिवेशेनैव निरुक्तातिव्याप्तिद्वयनिरासः। धर्मतावैशिष्ट्यञ्च स्वाश्रयविशिष्टत्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वसम्बन्धेन। वैशिष्ट्यञ्च स्वविशिष्टाधिकरणताविशिष्टाधिकरणताविशिष्टाधिकरणताविशिष्टत्व–वक्ष्यमाणसम्बन्धान्यतरसम्बन्धेन। वैशिष्ट्यत्रयमपि स्वावच्छिन्नप्रतियोगिताकभेदनिरूपितत्वसम्बन्धेन। परमाधिकरणतावैशिष्ट्यं स्वसमानाधिकरणेत्यादिभेदवत्त्वसम्बन्धेन। स्वाधिकरणत्वञ्च स्वविशिष्टप्रकारताशालिनिश्चयत्वसम्बन्धेन। प्रकारतायां स्ववैशिष्ट्यञ्च स्वाश्रयावच्छिन्नविशेष्यतानिरूपितत्वस्वनिरूपकभेदप्रतियोगितावच्छेदकाधिकरणताविशिष्टत्वोभय–सम्बन्धेन। अधिकरणतावैशिष्ट्यञ्च स्वनिरूपकभेदप्रतियोगितावच्छेदकाधिकरणतानिरूपकभेदप्रतियोगितावच्छेदकधर्मावच्छिन्नत्व–स्वविशिष्टाधिकरणताविशिष्टत्वउभयसम्बन्ध-

न्धेन। स्ववैशिष्ट्यं स्वावच्छिन्नप्रतियोगिताकभेदनिरूपितत्वसम्बन्धेन। अधिकरणतावैशिष्ट्यं स्वविशिष्टावच्छेदकतावृत्तित्वाधेयत्वोभयसम्बन्धेन। अवच्छेदकतायां स्ववैशिष्ट्यं स्वनिरूपकभेदप्रतियोगितावच्छेदकाधिकरणत्वाश्रयसम्बन्धावच्छिन्नप्रतियोगितात्वावच्छिन्नत्व-स्वविशिष्टप्रकारतानिरूपितप्रकारतावच्छेदकाभावत्वनिरूपितपर्याप्तिसम्बन्धावच्छिन्नावच्छेदकतात्वावच्छिन्नप्रतियोगितानिरूपितत्वोभयसम्बन्धेन। स्ववैशिष्ट्यञ्च स्वनिरूपकभेदप्रतियोगितावच्छेदकाधिकरणत्वाश्रयसम्बन्धावच्छिन्नत्व-स्वाश्रयत्वोभयसम्बन्धेन। स्वविशिष्टप्रकारतानिरूपितत्व-स्वनिरूपकभेदप्रतियोगितावच्छेदकाधिकरणतानिरूपकभेदप्रतियोगितावच्छेदकाधिकरणत्वाश्रयसम्बन्धावच्छिन्नत्वोभयसम्बन्धेन। अवच्छेदकतावृत्तित्वञ्च स्वावच्छेदकधर्मसम्बन्धावच्छिन्नावच्छेदकतानिरूपितानवच्छिन्नावच्छेदकतानिरूपितत्वावच्छेदकसम्बन्धावच्छिन्नस्वावच्छेदकावच्छिन्ननिरूपिताधिकरणतासम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वसम्बन्धावच्छिन्नाधेयतात्वावच्छिन्नावच्छेदकतानिरूपितत्वसम्बन्धेन। अथवा स्वविशिष्टप्रकारताविशिष्टत्व आधेयत्वोभयसम्बन्धेन। प्रकारतायां स्ववैशिष्ट्यं स्वनिरूपकभेदप्रतियोगितावच्छेदकाधिकरणत्वाश्रयसम्बन्धावच्छिन्नप्रतियोगितात्वावच्छिन्नत्व-स्वविशिष्टप्रकारतानिरूपिताभावत्वावच्छिन्नप्रकारतानिरूपितप्रतियोगितासम्बन्धावच्छिन्नावच्छेदकतात्वावच्छिन्न-प्रकारतानिरूपितनिरूपितत्वसम्बन्धावच्छिन्नत्वोभयसम्बन्धेन। स्ववैशिष्ट्यं स्वविशिष्टप्रकारतानिरूपितत्व-स्वनिरूपकभेदप्रतियोगितावच्छेदकाधिकरणतानिरूपकभेदप्रतियोगितावच्छेदकाधिकरणत्वाश्रयसम्बन्धावच्छिन्नत्वोभयसम्बन्धेन। प्रकारताया स्ववैशिष्ट्यं स्वाश्रयत्व-स्वनिरूपकभेदप्रतियोगितावच्छेदकाधिकरणत्वाश्रयसम्बन्धावच्छिन्नत्वोभयसम्बन्धेन। प्रतियोगितात्वावच्छिन्नप्रकारतावैशिष्ट्यं स्वनिरूपितत्व-स्वावच्छेदकधर्मसम्बन्धावच्छिन्नस्वाश्रयनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वसम्बन्धावच्छिन्नाधेयतात्वावच्छिन्नत्वोभयसम्बन्धेन स्वविशिष्टप्रकारतानिरूपितप्रकारतानिरूपितप्रकारताविशिष्टत्वसम्बन्धेन। वैशिष्ट्यं स्वावच्छेदकधर्मसम्बन्धावच्छिन्नत्वसम्बन्धेन। आधेयतात्वनिरूपितस्वावच्छेदकसम्बन्धावच्छिन्नाधेयतात्वावच्छिन्नप्रकारतानिरूपितप्रकारतावृत्तित्वसम्बन्धेन। भेदप्रतियोगितावच्छेदकत्वञ्च स्वावच्छेदकविषयताशून्यत्वसम्बन्धेन। तेन प्रतियोगिवैयधिकरण्याघटितजलव्यापकवह्न्यभावसमानाधिकरणजलनिरूपितप्रतियोगिवैयधिकरण्यघटितव्यापकत्ववद्वह्न्यभावसमानाधिकरणतादृशजलवत्ताज्ञाने सत्प्रतिपक्षज्ञानजनकतासत्त्वेऽपि न क्षतिः। एतेन प्रतियोगिवैयधिकरण्यघटितवह्न्यभाववज्जलव्यापकवह्न्यभावसमानाधिकरणजलवद्वृत्तितादृशजलवद्ह्रदे-ऽतिव्याप्तिशङ्का व्यपास्ता। प्रतियोगिवैयधिकरण्यघटितव्याप्तिघटितस्यैव लक्ष्यत्व एव। अन्यथा वृक्षः कपिसंयोगीत्यत्रापि सत्प्रतिपक्षापत्ते, मूलावच्छिन्नवृक्षः कपिसंयोगीत्यत्रासङ्कीर्णबाधानुपपत्तेश्च।

यत्तु ह्रदपक्षकवह्निसाध्यके वह्न्यभावाभाववद्वृत्तिजलवद्ध्रदेऽतिव्याप्तिरिति। तद् सत्, तस्यालक्ष्यत्वाभ्युपगमेऽपि त्वदुक्तरीत्यनुसरणेऽपि च स्वरूपसम्बन्धेनापि जनकत्वप्रतिबन्धकत्वयोर्व्याप्यव्यापकभावविवक्षणेन तत्रातिव्याप्तिगन्धाभावात्। इयत्तु जनकतायां प्रागुक्तविशेषणं अनुयोगितासम्बन्धेनाभाववृत्तित्वव्यापकगगनाभावकालीन गगनसाध्यकाभावपक्षकस्थले प्रतियोगिवैयधिकरण्यघटिताभाववृत्तित्वव्याप्यवत्त्वाद्गगनेऽतिव्याप्तिवारणाय। यद्यपि केचिदित्याद्युक्तपरिष्कारे जलं सामानाधिकरण्याभाववदित्यत्र सामानाधिकरण्यव्याप्यजलव्याप्यवज्जलेऽतिव्याप्तिः, तथापि सत्यन्तप्रतिबन्धकतायां तज्जनकताविशिष्टान्यत्वनिवेशात्तद्वारणम्। वैशिष्ट्यं स्वनिरूपितजन्यतावच्छेदकप्रकारतावच्छेदकतापर्याप्त्यधिकरणधर्मविशिष्टत्वसम्बन्धेन। वैशिष्ट्यं स्वसमानाधिकरणेत्यादिभेदवत्त्वसम्बन्धेन। स्वाधिकरणत्वं स्वावच्छिन्नविषयकनिश्चयत्वसम्बन्धेन। भेदप्रतियोगितावच्छेदकत्वं स्वरूपसम्बन्धेन।

अथैवंरीत्या परिष्कृत्य उक्तदोषवारणेऽपि पृथक्रूपेण जनकतामभ्युपेत्य स्वरूपसम्बन्धेन तज्जनकताव्यापकत्वं सत्यन्तप्रतिबन्धकतायां निवेश्य ह्रदस्समानाधिकरणजलाभाववानित्यत्र समानाधिकरणजलव्याप्यजलव्याप्यजलवद्ध्रदेऽतिव्याप्तिवारणेऽपि [illegible] शसामान्यत्वाभावव्याप्यद्रव्यत्वाभाववद्वृत्तिमत्तादृशघटेऽतिव्याप्तिः, द्रव्यत्वव्यापकस्तादृशसामान्यस्याभाव इति निश्चयविशिष्टद्रव्यत्ववान् घट इति निश्चयत्वावच्छिन्नप्रतिबन्धकतायास्तादृशत्वात्, उक्तरीत्या विशिष्टान्तराघटितत्वस्यापि तत्राक्षतत्वादिति चेन्न; अस्मत्पक्ष इव विशिष्टान्तराघटितत्वशरीरे जनकताया प्रकृतानुमितिनिरूपितप्रतिबन्धकताविशिष्टप्रतिबन्धकतावच्छेदकविषयित्वावच्छिन्नजन्यतानिरूपिताया एव निवेशेनैतत्कल्पेऽप्यभावव्याघटितरूपस्यैव विशिष्टान्तरत्वसम्भवेनोक्तातिव्याप्त्यनवकाशात्। जनकतायां विशिष्टान्तरविषयकत्वानवच्छिन्नत्वनिवेशपक्ष एवैतद्दूतिव्याप्तेः। विशिष्टान्तराघटितत्वशरीरे जनकताप्रतिबन्धकत्वयोः व्याप्यव्यापकभावं स्वावच्छेदकीभूताभावत्वावच्छिन्नविषयतावच्छेदकत्वसम्बन्धाभ्यां जलं सामानाधिकरण्याभाववदित्यत्र सामानाधिकरण्यव्याप्यजलव्याप्यजलवज्जलेऽतिव्याप्तिवारणार्थं परैर्विवक्षितमभ्युपगम्य स्वरूपसम्बन्धेनैव व्याप्यव्यापकभावविवक्षणेन ह्रदो वह्निमानित्यत्र वह्न्यभावव्याप्यजलव्यापकवह्न्यभावकालीनजलवद्ध्रदे एवमभावपक्षकानुयोगितासम्बन्धेनाभाववृत्तित्वव्यापकगगनाभावकालीनगगनसाध्यकस्थलेऽभाववृत्तित्वव्याप्यवत्त्वाद्गगने च नाव्याप्तिप्रसक्तिः।

यत्तु विशेष्यदले जनकत्वप्रतिबन्धकत्वयोर्न स्वरूपसम्बन्धेन व्याप्यव्यापकभावसम्भवति, प्रतियोगिवैयधिकरण्यघटितव्यभिचारज्ञानविरोधितावच्छेदकविषयिताशालिनिश्चयत्वेन प्रतियोगिवैयधिकरण्यघटिततद्घटितव्याप्त्यवगाहिपरामर्शयोरेकरूपेणैव जनकतायास्सिद्धान्तलक्षणव्याप्त्यनुगमादावुक्तत्वादिति । तत्र, एकदेशिमताभिप्रायेणैव तथोक्तत्वेन तत्र ग्रन्थकर्तुर्भराभावात् । अन्यथा सामानाधिकरण्यांशे पक्षताद्यंशज्ञानस्यापि जनकत्वापत्त्या विरोधस्य हेत्वाभाससाविरयापत्तेर्दुर्वारत्वात् ।

नच तथाविधव्यभिचारधीविरोधितावच्छेदकप्रकारतानिरूपितसाध्यतावच्छेदकावच्छिन्नप्रकारतानिरूपितसामानाधिकरण्यप्रकारतानिरूपितप्रकृतहेतुप्रकारतानिरूपितपक्षविषयताशालिनिश्चयत्वेन जनकत्वान्नोक्तदोष इति वाच्यम्, तथा साध्याभाववद्वह्निव्याप्यवच्छिन्नसमानाधिकरणधूमवान् पर्वत इति निश्चयस्यापि जनकत्वापत्ते, अभावस्य तथाविधव्यभिचाराभावावच्छेदकतया ग्रहणसम्भवात् । अनतिरिक्तवृत्तित्वरूपावच्छेदकत्वनिवेशेऽपि तादृशव्यभिचाराभाववदभाववद्रूपभाववद्वह्निवयवच्छिन्नसमानाधिकरणधूमवान् पर्वत इति ज्ञानस्य तथात्वापत्त । अप्रसाधारण्यभङ्गभीत्या व्यापकत्वरूपस्य तस्य निवेशयितुमशक्यत्वात् । प्रतिबन्धकतायां ज्ञानवैशिष्ट्यावच्छिन्नत्वनिवेशेऽपि तादृशव्यभिचाराभाववद्वृत्तिमद्वह्निवयवच्छिन्नसामानाधिकरण्यावगाहिनिश्चयस्य जनकत्वापत्ते । किञ्च उक्तरीत्या प्रतिबन्धकताघटितरूपेण जनकत्वाभ्युपगमे प्रतिबन्धकत्वस्य कारणीभूताभावप्रतियोगित्वरूपस्य बहुपदार्थघटिततमूर्तिकतया पृथक्पृथक् जनकत्वस्वीकारापेक्षया लाघवाबधकात्वात् । तस्माद्ग्रन्थकर्तुस्तत्र निर्भराभावादुक्तार्थे न कश्चिद्विरोध । अस्तु वा निरुक्तरूपेण जनकत्वम्, तथापि तज्जनकताया धर्मतावच्छिन्नविशिष्टविशिष्टस्वाश्रयत्वसम्बन्धेन व्याप्यत्वविवक्षणेनादोषात् । वैशिष्ट्यं स्वाश्रयाविशिष्टत्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वसम्बन्धेन । वैशिष्ट्यञ्च स्वविशिष्टाधिकरणताविशिष्टाधिकरणताविशिष्टाधिकरणताविशिष्टत्व स्वविशिष्टाधिकरणताविशिष्टाधिकरणताविशिष्टत्वान्यतरसम्बन्धेन । प्रथमसम्बन्धे द्वितीयसम्बन्धे च चरमाधिकरणतावैशिष्ट्यं स्वाश्रयावच्छिन्नविशेष्यतानिरूपितस्वविशिष्टप्रकारताकत्वसम्बन्धेन । शिष्टं पूर्वसम्बन्धे पूर्वोक्तरीत्या द्वितीयसम्बन्धे च वक्ष्यमाणरीत्या बोध्यम् । यद्वा जनकताविशिष्टत्वरूपस्य तज्जनकताव्यापकत्वस्य विवक्षणेनोक्तदोषाभावात् । वैशिष्ट्यञ्च स्ववृत्तिधर्मविशिष्टत्वसम्बन्धेन । वृत्ति स्वसमानाधिकरणेत्यादिभेदवत्वसम्बन्धेन । भेदप्रतियोगितावच्छेदकत्वं स्वानवच्छेदकविषयिताशून्यत्वसम्बन्धेन । धर्मवैशिष्ट्यं स्वावच्छिन्नविषयकनिश्चयत्वव्यापकत्वसम्बन्धेन । तेन पूर्वकल्पे वह्न्यभावव्याप्यप्रतियोगिवैयधिकरण्यघटितव्याप्यव्याप्यवद्देऽव्याप्तिसम्भवेऽपि न क्षति । यत्तु

त वह्न्यभावाभाववद्वृत्तिजलत्वसूदस्यालक्ष्यत्वपक्षेऽपि तत्रातिव्याप्तेः प्रकारान्तरेण वारयिष्यमाणतया उक्तापकविशेषाऽतिव्याप्तेश्च विशेष्यदलपरिष्कारादेव निरसिष्यमाणतया च सत्यन्तप्रतिबन्धकतायामुक्तविशेषणस्य परित्याज्यत्वात् अलं तद्विशेषणपरिष्कारपरिश्रमेण ।

यद्येवरीत्या परिष्कारे दोषाभावेऽपि केचित्त्वित्याद्युक्तपरिष्कारे प्रतियोगिवैयधिकरण्यघटितजलव्यापकवह्न्यभावसमानाधिकरणजलजलव्यापकवह्न्यभावसमानकालीनजलपृथक्त्ववद्देऽतिव्याप्तिः, उक्तरीत्या विशेष्यदलसत्त्वात्(व्यापकताघटितसत्प्रतिपक्षसङ्ग्रहाय विशिष्टान्तराघटितत्वशरीरेऽपि तज्जनकतायास्तत्प्रतिबन्धकताव्याप्यत्व एव उक्तसम्बन्धेनैव विवक्षणीयतया विशिष्टान्तराघटितत्वस्यापि तत्राक्षतत्वादिति । तन्न ; तत्पक्षे प्रतिबन्धकताविशिष्टधर्मवत्त्वस्यैव लक्षणत्वेनोक्तदोषोद्धारात् । वैशिष्ट्यञ्चाधेयतासम्बन्धेन । आधेयता च स्वसमानाधिकरणेत्यादिभेदवत्त्वत्वविशिष्टधर्मविशिष्टत्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वोभयसम्बन्धेन । स्वाधिकरणत्व-स्वावच्छिन्नविषयकनिश्चयत्वसम्बन्धेन । भेदप्रतियोगितावच्छेदकत्वं स्वरूप-स्वविशिष्टजनकताविशिष्टत्वोभयसम्बन्धेन । जनकतायां स्ववैशिष्ट्य-स्वविशिष्टपक्षप्रवृत्त्वव्यापकविशिष्टसाध्यप्रवृत्त्वाव्यापकप्रकृतानुमितित्वव्यापकत्वनिरूपितप्रतिबध्यतावच्छेदकावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकविषयत्वावच्छिन्नानुमितिनिष्ठजन्यतानिरूपितत्वाधेयत्वोभयसम्बन्धेन । आधेयता च स्वसमानाधिकरणेत्यादिभेदवत्त्वसम्बन्धेन । स्वाधिकरणत्व धर्मताविशिष्टस्वाश्रयतासम्बन्धेन । धर्मतावैशिष्ट्य पूर्ववत् । भेदप्रतियोगितावच्छेदकत्व स्वरूपसम्बन्धेन । जनकतावैशिष्ट्य स्वावच्छेदकविषयताघटितत्वसम्बन्धेन । धर्मे वैशिष्ट्य—स्वविशिष्टप्रतीतिविषयतावच्छेदकत्वसम्बन्धेन । प्रतीतौ स्ववैशिष्ट्य स्वावच्छिन्नविषयकत्वसम्बन्धावच्छिन्न—स्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वसम्बन्धेन । धर्मे वैशिष्ट्य स्वनिष्ठाभावप्रतियोगित्वस्वावच्छिन्नविषयकनिश्चयत्वव्यापकत्वोभयसम्बन्धेन । प्रतियोगिता च स्वव्याप्यप्रकृतानुमितिप्रतिबन्धकताविशिष्टप्रतिबन्धकतावच्छेदकविषयत्वावच्छिन्नानुमितिनिष्ठजन्यतानिरूपितजनकतावृत्तित्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वस्ववृत्तित्वोभयसम्बन्धावच्छिन्ना । वृत्तिश्च स्वावच्छिन्नविषयकनिश्चयत्वव्यापकत्वसम्बन्धेन । न चैव परिष्कारे प्रतिबन्धकतायामपि विशिष्टान्तरविषयकत्वाव्यापकत्वनिवेशो विफल इति वाच्य, जलत्वसामानाधिकरण्याभाववद्वृत्त्यत्र सामानाधिकरण्यस्याप्यजलव्याप्यजलव्याप्यत्वजलादिव्याप्तिवारकतया तत्सार्थक्यात् । एवं तद्-निवेशो जलव्यापकवह्न्यभावसमानाधिकरणजलत्वसामानाधिकरण्यजलत्ववद्धातिव्याप्तेश्च ।

बाधप्रतिबन्धकतायां असत्त्वेन वारणेऽपि, अभाववृत्तित्वव्यापकगगनाभावकालीनगगनस्याभावत्वावच्छेदेन साध्यत्वे प्रतियोगिवैयधिकरण्यघटिताभावनिष्ठाभावप्रतियोगित्वव्याप्यवत्ताज्ञानगगनेऽतिव्याप्तिरिति तद्वारणाय तज्ज्ञानव्यावर्त्तनस्यावश्यकतया तत एवोक्ताऽतिव्याप्तिवारणमिति तद्वैयर्थ्यं दुर्वारमिति वाच्यम्, सत्यन्तवैयर्थ्यमित्येव तन्निश्चयव्यावर्त्तनमकृत्वा तत्प्रतिबन्धकतायां तज्जनकताविशिष्टान्यत्वनिवेशेन तद्वारणात्। वैशिष्ट्यञ्च-स्वनिरूपितजनकतावच्छेदकप्रकारताविशिष्टत्वसम्बन्धेन। वैशिष्ट्यं-स्वनिरूपितविशेष्यतावच्छेदकावच्छिन्नविशेष्यताशालिनिश्चयविशिष्टत्वावच्छेदकावच्छिन्नप्रकारताशालिनिश्चयत्वव्यापकत्वसम्बन्धेन। यद्यपि एतद्विशेषणदलें उक्तस्थल एव प्रतियोगिवैयधिकरण्याघटिताभाववृत्त्यभावप्रतियोगित्वव्याप्यवत्ताज्ञानगगनेऽव्याप्तिः। अभाववृत्तित्वव्यापकगगनाभावत्वावच्छिन्नविषयकनिश्चयविशिष्टाभाववृत्त्यभावत्वावच्छिन्नविषयकनिश्चयत्वावच्छिन्नप्रतिबन्धकत्वाव्यप्रतिबन्धकत्वस्यत्ताधज्ञाने तत्सत्प्रतिपक्षज्ञाने चासत्त्वात्। तस्याश्च निरुक्तसम्बन्धेन तज्जनकताविशिष्टत्वात्। तथा च पूर्वोक्तातिव्याप्तिवारणाय प्रतियोगिवैयधिकरण्यघटितव्याप्यवत्ताज्ञानव्यावर्त्तनमेव कार्यम्, इत्थञ्च सत्यन्तवैयर्थ्यं दुर्वारम्। तथापि विशेष्यदले उक्तेयमनिबन्धकतायां तद्वैशिष्ट्यं, पूर्वं निवेश्य सत्प्रतिपक्षोच्छायके तर्कसाऽतिव्याप्तिवारणं क्रियते। नच सत्यन्तवैयर्थ्यम्, प्रतियोगिवैयधिकरण्यघटिततदभावव्याप्यवत्पक्षवारकतया तस्सार्थक्यात्। न च व्यापकताघटितसत्प्रतिपक्षसङ्ग्रहाय विशिष्टान्तरधर्मे पूर्वोक्तविशेषणस्यावश्यकतया द्रव्यसमानाधिकरणजलाभाववानित्यत्र प्रतियोगिवैयधिकरण्यघटितसमानाधिकरणजलव्याप्यजलवद्ध्रदेऽतिव्याप्तिः, तज्जनकताव्यापकत्वस्य तत्प्रतिबन्धकतायां निवेशे सत्यन्तवैयर्थ्यम्। अनुयोगितासम्बन्धेनाभाववृत्तित्वव्यापकगगनाभावकालीनगगनसाध्यकाभावपक्षकस्थलादौ प्रतियोगिवैयधिकरण्यघटिताभाववृत्तित्वव्याप्यवद्गगनादिव्यतिव्याप्तिश्च। एतेन प्रतियोगिवैयधिकरण्यघटितव्याप्तिविशिष्टसकलोदासीनवारणाय विशेष्यदले जनकतायाः अव्याप्यवृत्तित्वज्ञानविरहावच्छिन्नप्रतिबन्धकतानवच्छेदकत्वावच्छेदकाभावत्वावच्छिन्नविषयतासम्बन्धेन व्यापकत्वं विवक्षणीयमिति प्रत्युक्तम्। तत्राव्याप्यवृत्तित्वज्ञानविरहकालेऽपि प्रतियोगिवैयधिकरण्यघटितव्याप्त्यवगाहिनिश्चयस्य पृथक् प्रतिबन्धकत्वे मानाभावात्। एतेन तत्प्रतिबन्धकत्वे तज्जनकताव्यापकत्वलाभयैव सत्यन्तमित्यपि निरस्तम्, स्वोपेक्षितसद्दोषविशेषणतात्पर्यग्राहकत्वकथनस्यान्याय्यत्वादिति वाच्यम्। घटो गगनाभाववद्भाववत्कालीनगगनवानित्यत्र गगनाभाववदभाववद्वृत्तिगगनाभावव्याप्यवद्घटातिव्याप्तिवारकतया सत्यन्तसार्थक्यात्। बाधघटकीयप्रकारतामादाय सत्प्रतिबन्धकतावैशिष्ट्यस्य तत्र सूपपादत्वात्। विशेष्यदलघटकजनकतायां धर्मताविशिष्टत्वनिवेशादेव प्रतियोगिवैयधिकरण्यघटितव्याप्तिघटितसकलोदा-

सीनवारणाय । वैशिष्ट्यं स्वाश्रयविशिष्टत्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्वसम्बन्धेन । वैशिष्ट्यं पूर्वोक्तसम्बन्धस्य वैशिष्ट्याधिकरणताविशिष्टाधिकरणाविशिष्टस्यान्यतरसम्बन्धेन । आद्यवैशिष्ट्यद्वय स्वावच्छिन्नप्रतियोगिताकभेदनिरूपितत्वसम्बन्धेन । चरमवैशिष्ट्यं स्वसमानाधिकरण्येत्यादिभेदवत्वसम्बन्धेन । स्वाधिकरणत्वं स्वविशिष्टप्रकारताशालिनिश्चयत्वसम्बन्धेन । वैशिष्ट्य स्वाश्रयावच्छिन्नविशेष्यतानिरूपितत्वस्वनिरूपकभेदप्रतियोगितावच्छेदकाधिकरणताविशिष्टत्वोभयसम्बन्धेन । अधिकरणतावैशिष्ट्यञ्च स्वविशिष्टप्रतियोगितासम्बन्धावच्छिन्नप्रकारतानिरूपितत्वप्रतियोगितावच्छेदकधर्मसम्बन्धावच्छिन्नाधिकरणतासम्बन्धावच्छिन्नत्वस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्वस्वरूपोभयसम्बन्धावच्छिन्नाभावत्वावच्छिन्नप्रकारतानिरूपितनिरूपितत्वसम्बन्धावच्छिन्नप्रकारतावृत्तित्वसम्बन्धेन । प्रतियोगितायाँ अधिकरणतावैशिष्ट्यञ्च स्वाश्रयसम्बन्धावच्छिन्नत्वस्वनिरूपकभेदप्रतियोगितावच्छेदकधर्मपर्याप्तावच्छेदकताकत्वोभयसम्बन्धेन । वृत्तिश्च स्वविशिष्टप्रकारतानिरूपितत्वसम्बन्धेन । वैशिष्ट्यं स्वावच्छेदकसम्बन्धावच्छिन्नाधेयतात्वावच्छिन्नत्वस्वनिरूपिताभावत्वावच्छिन्नप्रकारतानिरूपितप्रतियोगितासम्बन्धावच्छिन्नप्रकारतात्वोभयसम्बन्धेन । एवं प्रतियोगिवैयधिकरण्यघटितव्यतिरेकव्याप्तिघटितवारणमूहनीयम् । न चैवं रीत्या प्रतियोगिवैयधिकरण्यघटितव्याप्त्यवगाहिज्ञानजनकतात्वावर्तनेऽसम्भवः, प्रतियोगिवैयधिकरण्यघटिततदघटितव्याप्तिनिश्चयोरेकरूपेण जनकताया प्राक् दर्शितत्वादिति वाच्यम्, तत्पक्षस्य निरस्तत्वात् ।

वस्तुतस्तु प्रतिबन्धकताविशिष्टत्वस्यैव लक्षणत्वेन उक्तसकलदोषोद्धारात् उक्तैकरूपेण जनकत्वेऽपि क्षतिविरहः । प्रतिबन्धकतावैशिष्ट्यञ्च, स्वविशिष्टप्रकारताविशिष्टत्वसम्बन्धेन । प्रकारतावैशिष्ट्यञ्च स्वावच्छेदकावच्छिन्नविशिष्टत्वनिरूपितविशेष्यतावच्छेदकत्वसम्बन्धेन । प्रकारताया प्रतिबन्धकतावैशिष्ट्यञ्च आधेयतासम्बन्धेन । आधेयता च स्वविशिष्टाधिकरणताविशिष्टनिश्चयनिष्ठभेदप्रतियोगितावच्छेदकत्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्वस्वनिरूपितविशेष्यतावच्छेदकावच्छिन्नविशेष्यतानिरूपितत्वावच्छेदकधर्मसम्बन्धावच्छिन्नप्रकारताशालिनिश्चयनिष्ठभेदप्रतियोगितावच्छेदकतासम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्वस्वविशिष्टयत्किञ्चिद्विशिष्टत्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदमत्वएतत्त्रितयसम्बन्धेन । अधिकरणताया स्ववैशिष्ट्य स्वनिरूपितविशेष्यतावच्छेदकताश्रयवृत्तित्वस्वावच्छिन्नप्रतियोगिताकभेदनिरूपितत्वोभयसम्बन्धेन । अधिकरणतावैशिष्ट्यञ्च निश्चये स्वाश्रयव्यापकत्वविशिष्टस्वनिरूपकभेदप्रतियोगितावच्छेदकप्रकारतावच्छेदकसम्बन्धावच्छिन्नत्वस्वाश्रयपर्याप्तावच्छेदकताकविशेष्यतानिरूपितत्वस्वनिरूपकभेदप्रतियोगितावच्छेदकप्रकारतावच्छेदकावच्छिन्नत्वएतत्त्रितयसम्बन्धेन स्वविशिष्टप्रकारतानिरूपकत्वसम्बन्धेन । भेदप्रतियोगितावच्छेदकत्वञ्च स्व-

निरूपितप्रतिबध्यतावच्छेदकावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकताविशिष्टत्वसम्बन्धेन । वैशिष्ट्यञ्च अव्याप्यवृत्तित्वज्ञानविरहावच्छिन्नप्रतिबन्धकतावच्छेदकत्वावच्छेदकीभूताभावत्वावच्छिन्ननिरूपितविषयितासम्बन्धेन । द्वितीयभेदप्रतियोगितावच्छेदकत्वञ्च स्वविशिष्टजनकताश्रयत्वस्वाश्रयत्वोभयसम्बन्धेन । जनकतायां स्ववैशिष्ट्यं पूर्ववत् । परन्तु तत्राधेयता सम्बन्धः प्रयोजनाभावात् न निवेशनीयः । धर्मे स्ववैशिष्ट्यञ्च स्वविशिष्टप्रतीतिवृत्तित्वसम्बन्धेन । प्रतीतिवृत्तित्वं धर्मवैशिष्ट्यञ्च पूर्ववत् । प्रतीतौ स्ववैशिष्ट्यञ्च स्वनिरूपितविशेष्यतावच्छेदकतावच्छिन्नविशेष्यतानिरूपितस्वावच्छेदकावच्छिन्नप्रकारताकत्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्सम्बन्धविशिष्टजनकतासम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वनिरूपितविशेष्यतावच्छेदकतावच्छिन्नविशेष्यतानिरूपितस्वावच्छेदकतावच्छिन्नप्रकारताकत्वावच्छिन्नप्रतिबन्धकतावत्त्वएतदुभयसम्बन्धावच्छिन्नस्वनिष्ठप्रतियोगिताकात्यन्ताभाववत्त्वसम्बन्धेन । जनकतायां स्ववैशिष्ट्यञ्च स्वसमानाधिकरणीयाविभेदवत्त्वसम्बन्धेन । स्वाधिकरणत्वं पूर्ववत् । भेदप्रतियोगितावच्छेदकत्वञ्च स्वानवच्छेदकविषयताशून्यत्वसम्बन्धेन । प्रथमसम्बन्धे भेदप्रतियोगितावच्छेदकत्वस्य स्वनिरूपितप्रतिबध्यतावच्छेदकावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकत्वविषयित्वावच्छिन्नानुमितिनिष्ठजन्यतानिरूपितजनकताविशिष्टत्वसम्बन्धेन वा निवेश्यताम् । वैशिष्ट्यं प्रतिबन्धकतावैशिष्ट्यवत् । न च प्रथमसम्बन्धनिवेशेन गौरवमिति वाच्यम्, अन्योन्याभावसाध्यकस्थलेऽतिव्याप्त्या दूषितत्वेन सर्वैरेवैतत्सम्बन्धस्यादरणीयत्वात् । न चैवं परिष्कारपक्षे जनकतायामपि विशिष्टान्तरविषयत्वानवच्छिन्नत्वनिवेशसम्भवेन सत्कोटिकता तद्दूषणमनुपपन्नम्, प्रत्युत व्यापकत्वाघटितव्याप्तिपक्षासद्भावाय विशिष्टान्तरे पूर्वोक्तविशेषणद्वयेन त्वन्मते गौरवमेवेति वाच्यम्,—तथा निवेशे निरुक्तप्रतियोगिवैयधिकरण्यघटितविशिष्टातिव्याप्तेः । तथाहि—निरुक्तरीत्या सम्बन्धद्वयेन जनकतानुमितिप्रकारताविशिष्टत्वं वाच्यम् । तत्र प्रथमसम्बन्धे भेदप्रतियोगितावच्छेदकत्वं स्वनिरूपितजन्यतावच्छेदकावच्छिन्नजन्यतानिरूपितजनकताविशिष्टत्वसम्बन्धेन वाच्यम्, तच्च न सम्भवति, विशिष्टाभावे अव्याप्यवृत्तित्वानुमितिं प्रति शुद्धगगनधर्मिकाभावावृत्तित्वव्याप्यत्वज्ञानस्याजनकत्वात् । एवमेकरूपेण जनकत्वास्युपगन्तृमते जलव्यापकेतराभाववान् ह्रद जलव्यापकवह्न्यभाववानित्यत्र जलव्यापकवह्न्यभावव्याप्यजलवत्ताज्ञानादाध्यत्वसत्प्रतिपक्षे जनकतायाः विशिष्टान्तराघटितत्वनिवेशपक्षेऽव्याप्तेश्च सत्यन्तवैयर्थ्यस्य वक्ष्यमाणत्वाच्च जनकतायां तन्निवेशासम्भवात् ॥

सर्वथैवरीत्या परिष्कारेण पूर्वोक्तातिव्याप्तिवारणेऽपि उक्तरीत्या सत्यन्तसार्थक्यवर्णनमनुपपन्नम्, तत्रैव गगनाभाववद्भाववद्वृत्तिगगनाभावव्याप्यगगनाभाववद्दानिव्याप्तिवारणाय तज्जनकताव्यापकत्वस्य सत्प्रतिबन्धकताभावदर्पकत्वेन

पाद्यम् । एवं सत्यनुयोगितासम्बन्धेन अभाववृत्तित्वव्यापकगगनाभावकालीनगगनसाध्यकाभावप्रसक्त्यन्ते अभाववृत्तित्वाभाववद्वृत्तिमत्त्वाद्गगनेऽव्याप्तेः, गगनत्वाघटितरूपस्य तत्र निरुक्तविशिष्टान्तरत्वसम्भवात् । नच प्रतिबन्धकतावैशिष्ट्यस्य समानाधिकरणेत्यादिभेदघटसम्बन्धेन, स्वाधिकरणस्य सामानाधिकरण्यविषयतासिद्धत्वावच्छेदकविषयतात्वसम्बन्धेन, भेदप्रतियोगितावच्छेदकताभवच्छेदकतासम्बन्धेन, निरुक्तविशिष्टस्य उक्तरीत्या गगनत्वाघटितरूपस्य विशिष्टान्तरत्वसम्भवेन सामान्यलक्षणे नाप्यन्वयिता एवम्प्रसङ्गमेव नास्ति । दोषत्वाङ्गीकारेऽपि उभयविशिष्टद्वयाघटितस्य निवेश्य जनकतायां विशिष्टान्तरविषयत्वानवच्छिन्नत्वमिति वक्ष्येऽप्युक्ताव्याप्तिरसमाना । पक्षवृत्तिताख्यविषयतायामनन्यप्रातिस्य विशिष्टद्वयविषयतायां निवेश्य तत्राव्याप्तिवारणे च विशिष्टान्तरधर्मे पुनरेव्यमात्रसाधारणपक्षवृत्तित्वव्याप्यत्वमात्राव्यापकतावच्छेदकमिश्रत्वनिवेशादव्याप्त्यलेऽपि तद्वारणम् । वस्तुतः स्वावच्छिन्नविषयताव्यापकजनकतावच्छेदकविषयताव्यापकजनकताविशिष्टत्वसम्बन्धावच्छिन्नत्वनिष्ठप्रतियोगिताकान्यतमाभाववज्ज्ञानवृत्तित्वमेव विशिष्टान्तरधर्मे निवेश्यमिति नोक्तदोषः, जनकतावैशिष्ट्यञ्च आश्रयतासम्बन्धावच्छिन्नत्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदप्रत्ययव्यापकप्रकृतानुमितिप्रतिबन्धकतात्वोभयसम्बन्धेन । एतेन विशिष्टवैशिष्ट्यावगाहिपरामर्शव्यक्तेरेव सत्प्रतिपक्षनिश्चयस्य जनकत्वेऽपि तद्विषये पूर्वोक्तप्रव्याप्तिसत्त्वेऽपि न क्षतिः । नापि व्यापकताघटितसत्प्रतिपक्षाव्याप्तिः न चोक्तातिव्याप्तिः, तत्र गगनाभावपदप्रवेशेनैव निरुक्तविशिष्टान्तरत्वसम्भवात् । एकरूपेण जनकत्वानुपगमेन सत्प्रतिबन्धकतायाः जनकताव्यापकत्वाभावात् ।

यत्त्वेव परिष्कारे द्रव्यं वह्निमानित्यत्र वह्न्यभावाभाववद्वृत्तिजलवद्ध्रदेऽतिव्याप्तिः, तस्य दृश्यतायाः सामान्यनिरुक्तौ रूपत्वादिति, तत्तु न समीचीनतया प्रतिभाति, केवलान्वयिग्रन्थे व्यापकसामानाधिकरण्यरूपव्याप्त्यवगाहिपरामर्शस्य जनकत्वे द्विधा हेतुतावच्छेदकप्रवेशाद्विना गौरवाद्धेतुतावच्छेदकावच्छिन्नरूपेण साध्याभाववद्वृत्तित्वनिश्चयहेतुत्वमेव उचितमिति "यावता साधनभेदेऽपी"ति दीधिति व्याख्याय तदुपरि अथ हेतुतावच्छेदकमनिवेश्य व्याप्तिप्रकारकज्ञानत्वेन हेतुत्वे व्यभिचारज्ञानकालेऽपि निर्द्धर्मितावच्छेदककव्याप्तिज्ञानोत्पत्त्या अनुमित्युत्पत्तेरावश्यकतया व्यभिचारस्य हेत्वाभासत्वानुपपत्तिरिति चेदित्याशङ्क्य पक्षकिञ्चिद्धर्मत्वेन हेतुतावच्छेदकधर्मानुगमस्य यत्किञ्चिद्धर्मावच्छिन्नधर्मिताकनिश्चयत्वेन हेतुत्वादिति समाधानात्, तस्य लक्षणस्यैव भट्टाचार्यानुमतत्वात्, सामान्यनिरुक्तावाशङ्काग्रन्थोक्ते तथा निर्भराभावात्, अन्यथा व्यापकसामानाधिकरण्यरूपव्याप्तिघटितस्यालक्ष्यतायामप्रोक्तत्वादस्याप्यलक्ष्यतापत्तेः । तुष्यतु दुर्जन इति न्यायेनाङ्गीकृत्यैव दूषणान्तरस्य तत्रोक्तत्वात् । नच तत्रैव केवलान्वयिग्रन्थे पक्षवृत्तित्वेन निश्चीयमानधूमत्वावच्छेदेनाव्यभिचारनिश्चयं विना पक्षवृत्तित्वावच्छेदेन व्यभिचारसंशयस्य

काधिकरणत्वाद्यन्यतमव्यापकत्वविशिष्टस्वाभावावच्छेदकतावच्छेदकसम्बन्धावच्छिन्नत्व-स्वाश्रयावच्छेदकावच्छिन्नत्वोभयसम्बन्धेन, भेदप्रतियोगितावच्छेदकत्वस्य पूर्वोक्तसम्बन्धेन, शुद्धगगनत्वावच्छिन्नाद्यवच्छेदेन तत्तदवच्छेदकधर्मवत्ताज्ञानस्य प्रत्यक्षप्रतिबन्धकत्वं स्वीकारेणोक्तपरिष्कारेणोक्तदोषोद्धारात् ।

नन्वेवंरीत्या परिष्कारेऽप्याधेयत्वनिरूपितत्वव्यापकगगनाभावकालीनगगनाभावत्वव्याप्यत्वपक्षकस्थले आधेयत्ववृत्तित्वव्याप्यत्वतादृशगगनाभावेऽव्याप्तिः, तदाधेयत्वसम्बन्धेन पक्षविशिष्टसाध्याभावस्यैव बाधतया तज्ज्ञानस्यैव सत्प्रतिपक्षत्वं चक्रकमिति उक्तविशिष्टस्वत्वस्य एवेति वाच्यम्, विरोधावगाहित्वेन । प्रतिबन्धकत्वाद्यप्राचीनमते उक्तविशिष्टस्यापि सद्धेतुत्वसम्भवात्; आधेयतावृत्तित्वनिरूपितप्रतियोगित्वपधिकरणघटितव्याप्तिविशिष्टतादृशगगनाभावे चातिव्याप्तिः, तद्व्याप्यवृत्तित्वविरहकालेऽपि प्रतिबन्धकत्वान्तरे मानाभावात्; एवं प्रतियोगित्वपधिकरणघटितव्याप्तिघटितउदासीनघटकपूर्वकत्वसम्बन्धोपादाने ह्रदो वह्निमान्स्यत्र आधेयतासम्बन्धेन ह्रदव्याप्यवह्न्यभावव्याप्त्या तथानिवेशासम्भवात् । प्रतियोगित्वपधिकरणघटितव्याप्तिघटितमात्रेऽतिव्याप्तिश्च; एवमुक्तप्रतिबन्धकतावैशिष्ट्यस्य जन्यतावच्छेदकप्रकारतायामुक्तरीत्या निवेशे व्यापकादकालीनह्रदो वह्निमानित्यत्र तादृशह्रदवृत्तित्वव्याप्यव्यापकह्रदव्यापकवह्न्यभावातिव्याप्तिश्च दुर्वारा स्यादिति चेत् ? नैवम्, प्रतिबन्धकताविशिष्टधर्मवत्त्वस्यैव पक्षाभावेन निरुक्तसकलदोषोद्धारात् । प्रतिबन्धकतावैशिष्ट्यं आधेयतासम्बन्धेन, आधेयता स्वसमानाधिकरणेस्वाभिन्नत्वावच्छिन्नविशिष्टधर्मविशिष्टत्वसम्बन्धावच्छिन्नत्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वोभयसम्बन्धेन, स्वाधिकरणत्वं धर्मे स्ववैशिष्ट्यं धर्मवैशिष्ट्यश्च पूर्ववत् । भेदप्रतियोगितावच्छेदकत्वञ्च स्वविशिष्टजनकताविशिष्टत्वस्वाश्रयत्वोभयसम्बन्धेन, जनकतावैशिष्ट्यं स्वावच्छेदकविषयताघटितत्वसम्बन्धेन, तेन प्रतियोगित्वपधिकरणघटितजन्यव्यापकह्रदभावसमानाधिकरणजन्यव्याप्यह्रदभावसमानकालीनह्रदे नातिव्याप्तिः ।

यत्तु उक्तातिव्याप्तिवारणाय जनकताविशिष्टत्वं अव्याप्यवृत्तित्वज्ञानविरहविशिष्टप्रतिबन्धकतानवच्छेदकस्वावच्छेदकाभावघटितविषयतासम्बन्धेन विवक्षणीयमिति, तन्न, वृत्ति द्रव्यभाववत् प्रमेयत्वं प्रमेयत्वाभाववदित्यादौ तद्व्यतिरेकव्यापकद्रव्यादिसमानाधिकरणव्याप्तित्वस्य द्रव्यादावव्याप्यतया निवेशासम्भवात् । तद्व्याप्तित्वव्यापकत्वनिरूपितप्रतियोगित्वपधिकरणघटितव्यापकत्ववद्धीत्वादिनिष्ठघटितव्याप्तित्वव्यापकत्ववद्धीत्वादिनिष्ठसाध्याव्याप्यवृत्तित्वज्ञानविरहकाले प्रतिबन्धकत्वात् । जनकभायां प्रतिबन्धकतावैशिष्ट्यं स्वनिरूपितव्यापि विधप्रतिबन्धकतावच्छेदकावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबन्धकताविशिष्टप्रकारताविशिष्टत्वसम्बन्धेन ।

प्रकारतायां प्रतिबन्धकतावैशिष्ट्यमाधेयत्वस्वविशिष्टत्व उभयसम्बन्धेन, आधेयत्वं
स्वसमानाधिकरणेत्यादिभेदवत्त्वसम्बन्धेन, स्वाधिकरणत्वं भेदप्रतियोगितावच्छेदक-
त्वञ्च स्वत्वम्, स्ववैशिष्ट्यं स्वनिरूपितप्रतिबध्यतावच्छेदकविशेष्यतावच्छेदकधर्मवि-
शिष्टत्वाधेयत्वान्यतरसम्बन्धेन, धर्मवैशिष्ट्यञ्च स्वावच्छिन्नव्यापकीभूताभावप्रतियो-
गित्वपर्याप्त्यवच्छेदकताकत्वस्वावच्छिन्नावृत्तित्वपर्याप्त्यवच्छेदकताकत्वस्वावच्छिन्न-
वृत्तित्वपर्याप्त्यवच्छेदकताकत्वान्यतमसम्बन्धेन, आधेयता स्वसमानाधिकरणे-
त्यादिभेदवत्त्वसम्बन्धेन, स्वाधिकरणत्वं स्वविशिष्टनिश्चयत्वसम्बन्धेन, निश्चये स्ववै-
शिष्ट्यं स्वविशिष्टाधिकरणताविशिष्टत्वसम्बन्धेन, अधिकरणतायां स्ववैशिष्ट्यं स्वा-
वच्छिन्नप्रतियोगिताकभेदनिरूपितत्वाधेयत्वोभयसम्बन्धेन, आधेयता स्वविशिष्टप्रका-
रतावच्छेदकावच्छिन्नत्वसम्बन्धेन, प्रकारतायां स्ववैशिष्ट्यं स्वाश्रयनिरूपकविशेष्य-
तानिरूपितत्वस्वाश्रयावच्छेदकावच्छिन्नव्यापकत्वविशिष्टस्वनिरूपकभेदप्रतियोगिताव-
च्छेदकप्रकारतावच्छेदकसम्बन्धावच्छिन्नत्वोभयसम्बन्धेन, अधिकरणतावैशिष्ट्यञ्च नि-
श्चये स्वाश्रयनिरूपकनिश्चयविशिष्टविशेष्यतानिरूपकत्वोभयसम्बन्धेन, निश्चये
निश्चयवैशिष्ट्यमेकक्षणावच्छिन्नैकात्मवृत्तित्वसम्बन्धेन, विशेष्यतायां स्ववैशिष्ट्यञ्च
स्वाश्रयावच्छेदकतावच्छेदकधर्मसम्बन्धावच्छिन्नप्रकारतानिरूपितत्वस्वनिरूपकभेदप्र-
तियोगितावच्छेदकप्रकारतानिरूपितविशेष्यतावच्छेदकावच्छिन्नत्वोभयसम्बन्धेन, भे-
दप्रतियोगितावच्छेदकत्वञ्च स्वनिरूपितप्रतिबध्यतावच्छेदकावच्छिन्नप्रतिबध्यतानि-
रूपितप्रतिबन्धकताविशिष्टत्वसम्बन्धेन, प्रतिबन्धकतावैशिष्ट्यं स्वानवच्छेदकवि-
षयताशून्यत्वसम्बन्धेन; तेन ह्रदो वह्निमानित्यत्र जलवद्धूमव्याप्यवद्ध्रदप्र-
भाववज्जलवदादौ नातिव्याप्तिः, यद्यप्येवं परिष्कारे गगनाभाववद्भाववत्कालीन-
गगनं गगनवदित्यत्र गगनवृत्तिव्याप्यवत्तास्वगगननिष्ठाभावप्रतियोगित्वेऽव्याप्तिः,
गगनावच्छेदकतया गृहीतधर्मवत्तानिश्चयस्याभाववात् गगनाश्रयवानिति निश्चयवि-
शिष्टतादृशगगनवृत्तिरभाव इति निश्चयत्वावच्छिन्नप्रतिबन्धकतापेक्षया अतिरिक्तप्रति-
बन्धकत्वे मानाभावात् । तथाच स्वानवच्छेदकविषयताशून्यत्वसम्बन्धेनासत्त्वात्,
तथापि तादृशप्रतिबध्यतावच्छेदकविशेष्यतावच्छेदकधर्मविशिष्टस्वावच्छिन्नव्यापकी-
भूताभावप्रतियोगित्वपर्याप्त्यवच्छेदकताकविषयताविशिष्टत्वस्वावच्छिन्नावृत्तित्व-
पर्याप्त्यवच्छेदकताकविषयताविशिष्टत्वस्वावच्छिन्नवृत्तित्वपर्याप्त्यवच्छेदकताकविषय-
ताविशिष्टत्वैतदन्यतमसम्बन्धेन, विषयतावैशिष्ट्यञ्च स्वनिरूपितत्वतादात्म्यान्यतरस-
म्बन्धेन; इत्यत्र नोक्ताव्याप्तिः । यद्यप्युक्तपक्षसाध्यकस्थले तादृशगगनत्वव्यापकी-
भूताभावप्रतियोगित्वस्याप्रसिद्धे तादृशव्याप्यवद्भावविशिष्टगगने चातिव्याप्तिः ।
एवं साध्याभावस्य साध्याभावत्वेनैव पक्षतावच्छेदकव्यापकत्वस्य पक्षतयाकाश-
समवायवद्ध्रदादिसाध्यकस्थले पक्षतावच्छेदकव्यापकीभूताभावप्रतियोगित्वाप्रसिद्ध-
ह्रदपदादावव्याप्तिः, एवं पक्षतावच्छेदकभेदप्रतियोगितावच्छेदकत्वव्याप्यत्वसाध्यादौ,
तथापि प्रकारतायां उद्देश्यप्रतिबन्धकतावैशिष्ट्यशरीरे अन्यतरत्वघटकप्रथमसम्बन्ध-

स्थाने स्वनिरूपितप्रतिबध्यतावच्छेदकीभूतप्रकारताविशिष्टत्वनिवेशात् । गगनाभाववदभाववत्कालीनगगनाभाववदभावविशिष्टवत्कालीनगगनाभाववदभाववदभावप्रतियोगित्ववत्कालीनगगनवत्पक्षकगगनसाध्यकस्थले तादृशगगनस्यापरीभूताभावप्रतियोगित्वव्याप्यवत्त्वगगने तादृशप्रतियोगितावच्छेदकतया गृहीतधर्मवत्तानिश्चये प्रतिबन्धकत्वाभावेन निरुक्तान्यतरघटकद्वितीयसम्बन्धमात्रेण उद्देश्यप्रतिबन्धकतावैशिष्ट्यस्य तत्प्रकारतायामसत्त्वेऽपि नाव्याप्तिः, न वा तादृशाव्याप्तिवारणाय द्वितीयसम्बन्धे निश्चये निश्चयवैशिष्ट्य तादात्म्येन निवेश्य व्यापकत्वस्य स्वरूपसम्बन्धेन विवक्षणे तादृशप्रतियोगिव्याप्याभाववद्वृत्तिमद्गगनेऽतिव्याप्तिः, न वा पूर्वोक्तस्थलस्य, प्रकारताविशिष्टत्वं स्वसामानाधिकरण्यादित्रितयसम्बन्धेन, स्वाधिकरणत्व स्वविशिष्टनिश्चयत्वसम्बन्धेन, निश्चये स्ववैशिष्ट्य पृथगेव बोध्यम् । नच उक्तरीत्या अन्यतरत्वघटकद्वितीयसम्बन्धनिवेशे स्वरूपसमवायोभयसम्बन्धेन अभाववत्साध्यवत्त्वसम्बन्धावच्छिन्नभावत्वावच्छिन्नप्रतियोगिताकाभावस्वरूपसमवायोभयसम्बन्धावच्छिन्नाभावत्वावच्छिन्नप्रतियोगिताकाभाववत्साध्यव्याप्यवत्कालीनघटपक्षकस्थले निरुक्तसम्बन्धावच्छिन्नाभावत्वावच्छिन्नप्रतियोगिताकाभावव्याप्यव्याप्यवत्तादृशघटे अतिव्याप्तिः स्वरूपसमवायोभयसम्बन्धावच्छिन्नाभावव्याप्यव्याप्यत्वावच्छिन्नप्रकारताया उद्देश्यप्रतिबन्धकतानिरूपितप्रतिबध्यतावच्छेदकत्वात्, एवं घटे गगनाभाववदभाववत्कालीनगगनस्य साध्यत्वे गगनाभाववदभाववद्वृत्तिगगनाभावव्याप्यवद्घटे चातिव्याप्तिरिति वाच्यम्, -प्रतिबध्यतावच्छेदकीभूतप्रकारताया अनुमितिव्यापकत्वनिवेशेन उक्तदोषोद्धारात् । न चैवमपि ह्रदो वह्निमानित्यत्र वह्न्यभावव्याप्यवह्न्यभावव्याप्यवद्ध्रदेऽतिव्याप्तिः, भेदप्रतियोगितावच्छेदकसम्बन्धे उद्देश्यप्रकारतावैशिष्ट्य प्रतिबध्यतायां स्वनिरूपितविशेष्यतावच्छेदकावच्छिन्नविशेष्यकत्वावच्छेदकावच्छिन्नप्रकारकानुमितिव्यापकत्वविशिष्टान्तरविषयकत्वाव्यापकत्वोभयसम्बन्धेन निवेश्य उक्तातिव्याप्तिवारणे चाधेयत्व आधेयत्वाभाववदित्यत्र आधेयवृत्तित्वव्याप्यवदाधेयत्वे अव्याप्तिरिति वाच्यम्, निरुक्तान्यतरसम्बन्धान्तर्गतप्रथमसम्बन्धमादायैव तत्राव्याप्त्यनवकाशात्, अत एव तत्साध्यकयाच, यदैव सति ह्रदे काञ्चनमयवह्निमानित्यत्र वह्न्यभाववत्ताबुद्धिं प्रति काञ्चनमयवह्न्यवच्छेदेन गृहीतधर्मवत्तानिश्चयस्य प्रतिबन्धकत्वे महाचार्यसम्मत्यदर्शनात् । वह्न्यभावव्याप्यवद्ध्रदेऽव्याप्तेः तादृशप्रतिबध्यतावच्छेदकप्रकारतावैशिष्ट्यशरीरे तादृशप्रकारतावच्छेदकतापर्याप्तिनिवेशस्य आवश्यकत्वात्, अन्यथा वह्न्यभावव्याप्याभावकालीनवह्नेः साध्यत्वे सत्प्रतिपक्षोच्छेदापत्तेर्दुर्वारत्वादिति वाच्यम्, — चन्द्रनारायणभट्टाचार्यप्रभृतिभिः वह्निसामान्याभाववत्ताबुद्धौ महानसीयवह्निव्याप्यवत्ताज्ञानस्य प्रतिबन्धकत्वादर्शनात्, निरुक्तज्ञानप्रतिबध्यतया अपि तदनुमतत्वात्, एतदभिप्रायेणैव हि घटकालीनो यो वह्न्यभाव तद्व्याप्यवद्ध्रदेऽतिव्याप्तिरिति परैरुक्तम् । न चैवं सति घटकालीनवह्न्यभावव्याप्यवद्ध्रदे पक्षेन।

तिव्याप्तिर्दुर्वारैवेति वाच्यम्,—परोक्तरीत्या उद्देश्ये विशिष्टान्तराघटितत्वनिवेशादेव तद्वारणात् । न च तन्निवेशे गगनाभाववद्भाववत्कालीनघटो गगनवानित्यत्र घट-वृत्त्यभावप्रतियोगित्वव्याप्यवद्गगनाव्याप्तिरिति परोक्तरीत्या उद्देश्ये विशिष्टान्तरा-घटितत्वनिवेशो न सम्भवतीति वाच्यम्, तादृशदोषस्य परमत एव सम्भवात्, अस्मन्मते भट्टाचार्योक्तसामान्यलक्षणानाक्रान्तत्वेन उद्देश्यस्य व्याप्यत्वस्य लक्ष्यत्वा-स्वीकारात् । न च "सिद्धानुगममात्रं हि कर्तुं युक्तं परीक्षकैः न सर्वलोकसिद्धस्य ल-क्षणेन निवर्तनम्" इति न्यायेन लक्षणाभावेन लक्ष्यत्वानभ्युपगमोऽनुचित इति वाच्य-म्, दोषपदप्रवृत्तिनिमित्तस्यैव भट्टाचार्येण उक्तत्वेन प्रवृत्तिनिमित्तशून्यस्यावाच्यताया-स्सर्वसम्मतत्वात् । तर्हि प्रतिहेतुव्यापकसाध्याभावसमानाधिकरणप्रतिहेतुमत्पक्ष-स्यापि प्रवृत्तिनिमित्तशून्यत्वेनालक्ष्यत्वं स्यादिति वाच्यम्, दोषपदप्रवृत्तिनिमित्ते परिष्कृत्य सत्प्रतिपक्षस्य लक्ष्यतां वदतो भट्टाचार्यस्य तत्साधारणप्रवृत्तिनिमित्त-परिष्कार एव तात्पर्यावगमात् । न चैवमपि जलवद्ह्रदकालीनह्रदो वह्निमानित्यत्र जलव्यापकवह्न्यभावाभावव्यापकीभूताभावप्रतियोगिमत्ताह्रदपक्षे अतिव्याप्तिः, उद्देश्यज्ञाननिष्ठायाः जलव्यापकवह्न्यभाववत्त्वावच्छिन्नविषयतानिरूपितविशिष्टायाः जल-वद्ह्रदविषयतानिरूपितत्वावच्छिन्नप्रतिबन्धकतायाः विशिष्टान्तरविषयकत्वाव्यापकत्वात् । उक्तरीत्या जलव्यापकवह्न्यभावावच्छेदकतया गृहीतधर्मवत्ताविषयस्य वह्निमत्ताबुद्धि-प्रतिबन्धकत्वाधौ इति वाच्यम्,—स्वरूपतः साध्यवत्ताग्राहधर्मितावच्छेदकीभूता ये ये धर्माः तद्यत्किञ्चित्तद्धर्मितावच्छेदकसाध्यवत्ताज्ञाने तत्तद्धर्मधर्मितावच्छेदककत्व-किञ्चिद्धर्मीयविशिष्टप्रकारकनिश्चय. विशिष्टान्तरविषयकत्वानवच्छिन्नप्रतिबन्धकतावान् भवति तद्रूपावच्छिन्नप्रकारतया एव उद्देश्यप्रकारतारूपतया विवक्षणेन उक्तातिव्याप्तिनिरासात् । न चैवं सति ह्रदवृत्तिजलव्याप्यवह्न्यभावाद्यव्याप्तिरिति वाच्यम्, उद्देश्यप्रकारतायां उद्देश्यप्रतिबन्धकताविशिष्टत्वस्यैव तदर्थत्वात् । प्रतिबन्धकताविशिष्ट्यञ्च स्वसमानाधिकरणत्वाभिन्नविशेष्यतासम्बन्धेन । स्वाधिकरणत्व स्वनिरू-पितप्रतिबध्यतावच्छेदकावच्छिन्नप्रकारतानिरूपितकिञ्चिद्धर्मनिष्ठनिरवच्छिन्नतावच्छेदक-ताकविशेष्यताशालिधर्मनिरवच्छिन्नान्येन । भेदप्रतिबध्यतावच्छेदकञ्च स्वविशिष्टप्रति-बन्धकतानिरूपितप्रतिबध्यतासम्बन्धेन । प्रतिबन्धकतायां स्वविशिष्टं स्वावच्छेद-कावच्छिन्नप्रकारताविशिष्टत्वस्वनिरूपितविशेष्यतावच्छेदकावच्छिन्नविशेष्यताविशिष्ट-त्वउभयसम्बन्धेन । प्रकारतांशविशिष्ट्यञ्च विशिष्टान्तरविषयकत्वानवच्छिन्नत्वविशि-ष्टत्वनिरूपितविशेष्यतावच्छिन्नविशेष्यतानिरूपितस्वावच्छेदकावच्छिन्नप्रकारताशालि-निश्चयत्वव्यापकत्वसम्बन्धेन । विशेष्यतांशविशिष्ट्यमपि विशिष्टान्तरविषयकत्वा-नवच्छिन्नत्वविशिष्टत्वनिरूपितप्रकारतावच्छेदकावच्छिन्नप्रकारतानिरूपितस्वावच्छे-दकावच्छिन्नविशेष्यताशालिनिश्चयत्वव्यापकत्वसम्बन्धेन । अधिकं विशिष्ट-द्वयाघटितत्वविचारोपविशेषाया अवधेयम् । अनन्वयायामुद्देश्यप्रकारतांवैशिष्ट्यनि-वेशात् प्रतियोगिवैयधिकरण्यघटितव्याप्तिघटितपदार्थमात्रे अतिव्याप्तिप्रसङ्गः ।

म्बन्धेन । प्रतिबन्धकतायां स्ववैशिष्ट्यं स्वसमानाधिकरणैत्यादिभेदवत्त्वसम्बन्धेन । स्वाधिकरणत्वं स्वावच्छेदकीभूताभावत्वावच्छिन्नविषयतात्वसम्बन्धेन । भेदप्रतियोगितावच्छेदकत्वमवच्छेदकतासम्बन्धेन । द्वितीयसम्बन्धनिवेशात् नैषत्वविशिष्टसपक्षनिपक्षानिव्याप्तिः ।

अथवा द्वितीयसम्बन्धं परित्यज्य जनकतायां स्वावच्छेदकविषयताशून्यत्वसम्बन्धेन स्वावच्छिन्नविषयताव्यापकत्वं निवेश्यम् । न चैवं निवेशे एकरूपरूपेण जनकतापक्षे जलत्वव्यापकवह्न्यभावसमानाधिकरणजलत्वैवालव्यापकवह्न्यभावसमानाधिकरणजलत्वैवालोभयवद्ध्रदे जलत्वव्याप्यवह्न्यभावसमानाधिकरणजलत्ववत्त्वैवालव्यापकवह्न्यभावसमानाधिकरणैवालवद्ध्रदे चातिव्याप्तिरिति वाच्यम्,—तत्र द्वितीयसम्बन्धनिवेशपक्षे उक्तदोषानवकाशात् । तन्निवेशपक्षेऽपि अधिकरणताविशिष्टप्रकारताविशिष्टत्वस्यैव लक्षणघटकत्वेन उक्तदोषानवकाशात् । प्रकारतायामधिकरणतावैशिष्ट्यं स्वाश्रयप्रकारतानिरूपितविशेष्यतावच्छेदकावच्छिन्नविशेष्यतानिरूपितत्वाधेयत्वोभयसम्बन्धेन । आधेयता स्वसमानाधिकरणैत्यादिभेदवत्स्वविशिष्टधर्मविशिष्टत्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वोभयसम्बन्धेन । स्वाधिकरणत्वं स्वनिरूपितविशेष्यतावच्छेदकावच्छिन्नविशेष्यतानिरूपितस्वावच्छेदकावच्छिन्नप्रकारताशालित्वनिश्चयत्वसम्बन्धेन । भेदप्रतियोगितावच्छेदकत्वञ्च स्वविशिष्टप्रतिबन्धकताश्रयत्वस्वाश्रयविशिष्टजनकतावत्त्वोभयसम्बन्धेन । प्रतिबन्धकतायां स्ववैशिष्ट्यं आधेयतासम्बन्धेन । आधेयता स्वनिरूपितप्रकृतानुमितित्वव्यापकप्रतिबध्यतावच्छेदकावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावृत्तिप्रकारतावृत्तित्वस्वावच्छिन्नप्रतियोगिताकभेदनिरूपितस्वसमानाधिकरणैत्यादिभेदवत्त्व एतदुभयसम्बन्धेन । प्रतिबन्धकतावृत्तित्वं प्रकारतायां स्पष्टम् । तृतीयसम्बन्धे स्वाधिकरणत्वं स्वरूपसम्बन्धेन । भेदप्रतियोगितावच्छेदकत्वं स्वाश्रयविशिष्टत्वसम्बन्धेन । वैशिष्ट्यं स्वनिरूपितविशेष्यतावच्छेदकावच्छिन्नविशेष्यतानिरूपितस्वावच्छेदकावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्नप्रकारताशाल्यनुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतात्वसम्बन्धेन । तृतीयसम्बन्धनिवेशात् न प्रतियोगिवैयधिकरण्यघटितव्याप्तिघटितपक्षधर्मताज्ञानेऽतिव्याप्तिः, न वा द्रव्यत्ववद्वृत्त्यभावविशिष्टव्यापकसामान्यत्वाभावकालीनभासामान्यत्ववानित्यत्र विशिष्टसामान्यत्वाभावव्याप्यद्रव्यत्वाभाववद्वृत्तिसत्ताकघटे जलत्वद्ध्रदो वह्निमानित्यत्र वह्न्यभावव्याप्यजलत्वव्यापकजलवद्ध्रदेऽतिव्याप्तिः, जनकतायां प्रकारतावैशिष्ट्यं स्वनिरूपितविशेष्यतावच्छेदकावच्छिन्नविशेष्यतानिरूपितस्वावच्छेदकधर्मसम्बन्धावच्छिन्नप्रकारताशाल्यनुमितित्वावच्छिन्नजन्यतानिरूपितत्वसम्बन्धेन । धर्मे प्रकारतावैशिष्ट्यञ्च स्वविशिष्टप्रतीतिविषयतावच्छेदकत्वसम्बन्धेन । प्रतीतौ स्ववैशिष्ट्यं स्वनिरूपितविशेष्यतावच्छेदकावच्छिन्नविशेष्यतानिरूपितस्वावच्छेदकधर्मसम्बन्धावच्छिन्नप्रकारताक-

वसाद्यन्यतावच्छिन्नत्वनिष्ठावच्छेदकताकप्रतियोगितानिरूपकभेदप्रयोजकत्वविशिष्टजनकताविशिष्टस्य स्वावच्छिन्नत्वनिष्ठप्रतियोगिताकात्यन्ताभावत्वोभयसम्बन्धेन । जनकतायां स्वविशिष्टत्वं स्वसमानाधिकरणोत्पादिभेदवात्त्वसम्बन्धेन । स्वाधिकरणत्व स्वनिरूपितविशेष्यतावच्छेदकावच्छिन्नविशेष्यतानिरूपितस्वावच्छेदकावच्छिन्नप्रकारताशालिनिश्चयत्वसम्बन्धेन । भेदप्रतियोगितावच्छेदकत्व स्वावच्छेदकविषयताशून्यत्वसम्बन्धेन । जनकतावैशिष्ट्यं पूर्ववत् । धर्मेवैशिष्ट्यं स्वसमेतत्वादिसम्बन्धेन । भेदप्रतियोगितावच्छेदक च स्वाश्रितरूपकभेदप्रतियोगितावच्छेदकप्रतियोग्यतासम्बन्धेन । वह्न्यभावव्याप्यवैवालयह्रदो वह्न्यभाववानित्यनुमितिजनकतामादाय पद्म्यभावव्याप्यजलवानयाह्रदे मत्स्यवह्रदो वह्न्यभाववानित्यनुमितिजनकतामादाय घटाभावव्याप्यवत्त्वेयह्रदे धानिव्याप्तिवर्ता उक्ततृतीयसम्बन्धनिवेशादेव दुरोत्सारिता वेदितव्या । इत्थञ्च वह्न्यभावपद्म्यभावव्याप्यव्याप्यवत्कालीनह्रदो वह्निमानित्यत्र वह्न्यभावव्याप्यव्याप्यवत्ताज्ञाने ह्रदेऽतिव्याप्तिश्च, वह्न्यभावव्याप्यव्याप्यवान् वह्न्यभाववान् वह्न्यभावव्याप्यव्याप्यवान् तादृशो ह्रद, घटाभावव्याप्यव्याप्यवान् वह्न्यभाववान् घटाभावव्याप्यव्याप्यवांश्च तादृशो ह्रद इति निश्चयानामेकरूपेण प्रतिबन्धकत्वानुपगमेन उक्ततृतीयसम्बन्धाभावादेव वारणीया । वह्न्यभावव्याप्यव्याप्यवह्न्यभाववद्ह्रदादावतिव्याप्तिस्तु निरुक्ततृतीयसम्बन्धाभावात् विरुक्तरीत्या विशिष्टान्तराघटित्वाभावाच्च न सम्भवति । न चैव तृतीयसम्बन्धनिवेशे अभावविशिष्टव्यापकत्वाभाव्यस्वाभावकालीनसमानाधिकरणाभावाभाववानित्यत्र तादृशसाध्याभावाभाववद्वृत्तिमत्पक्षाव्याप्तिरिति वाच्यम्, नानासम्बन्ध यदाहिनिश्चयानामेकरूपेण प्रतिबन्धकत्वाभ्युपगमे चाप्रोक्तद् । प्रतियोगिवैयधिकरण्यघटितव्याप्तिघटितवह्न्यभावव्याप्यवह्न्यभाववद्धानिव्याप्तिस्तु निरुक्तविशिष्टान्तराघटितत्वाभावादेव वारणीया । वृत्तिव्यापकगगनाभावकालीनगगनवत्क्षणगगनसाध्यकस्थले उक्तातिव्याप्ति तदन्यघटितपूर्वोक्तातिव्याप्तिश्च उक्तविशिष्टान्तरापटितत्वाभावादेव निवारिता । इत्थं वह्निमानित्यत्र घटकालीनवह्न्यभावाभाववद्वृत्तिमत्पक्षेऽतिव्याप्ति सम्बन्धाभावादेव वारित । तच्छरीरे वह्न्यभावव्याप्तेरप्रवेशात् । न च तद्भावव्याप्तेरप्रवेशेऽपि तन्निर्णयस्य वह्न्यानुमितिविरोधित्वमावश्यकम्, अन्यथा महानसीयवह्निव्याप्यवत्त्वपरामर्शकाले उक्तपरामर्शे च सति सदायाकारानुमितिर्दुर्वारा स्यादिति वाच्यम्, सदायाकारानुमित्यापत्तिवारणायैव, कस्यचित्प्रतिबन्धकताकल्पनस्य यत्किञ्चिद्व्यवस्थत्वात् । प्रकारान्तरेण प्रतिबन्धकत्वे स्थापिते सति तत्प्रतिबन्धकतावच्छेदकाक्रान्ततया हि सदायाकारानुमितिर्निरस्ता भवतुकृता । अन्यथा ' परेति "त्यादिना सदायाकारानुमितिस्थापन अह्रदायोगानुपपन्न स्यात् । एतदापत्यैव तादृशकपिसंयोगाभावव्याप्यवत्ताज्ञानस्यापि प्रतिबन्धकत्वकल्पनसम्भवात् । एव तादृशनिश्चयस्य भगिमन्ताद्विन्यायेन प्रतिबन्धकत्वोपगमे सामान्यलक्षणस्य पर्वतपक्षकवह्न्यभावसाध्यकस्थले पर्वतीयवह्निव्याप्यवत्त्वेऽतिव्याप्ति । अस्तु वा उक्तनिश्चयस्य विरोधित्वम्, तथापि नोक्तातिव्याप्तिरुक्तरीत्या

स्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगितानिरूपकभेदवत्त्वस्वविशिष्टजनकताविशिष्टस्वसम्बन्धावच्छिन्नस्वनिष्ठप्रतियोगिताकात्यन्ताभावत्वोभयसम्बन्धेन । जनकताया स्ववैशिष्ट्यं स्वसमानाधिकरणत्वादिभेदवत्त्वसम्बन्धेन। स्वाधिकरणत्व स्वनिरूपितविशेष्यतावच्छेदकावच्छिन्नविशेष्यतानिरूपितस्वावच्छेदकावच्छिन्नप्रकारताशालिनिश्चयत्वसम्बन्धेन । भेदप्रतियोगितावच्छेदकत्व स्वावच्छेदकविषयताशून्यत्वसम्बन्धेन। जनकतावैशिष्ट्यं पूर्ववत् । धर्मवैशिष्ट्य स्वसत्त्वादिसम्बन्धेन । भेदप्रतियोगितावच्छेदकत्व स्वनिरूपकभेदप्रतियोगितावच्छेदकप्रतिबन्धकतासम्बन्धेन । वह्न्यभावव्याप्यवानयं ह्रदो वह्न्यभाववानित्यनुमितिजनकतामादाय वह्न्यभावव्याप्यजलस्य तादृशह्रदे प्रमेयह्रदो वह्न्यभाववानित्यनुमितिजनकतामादाय वह्न्यभावव्याप्यप्रमेयह्रदे चातिव्याप्तिवारणाय उक्ततृतीयसम्बन्धनिवेशादेव सूचीकटाहन्यायेनावगन्तव्या । इत्थञ्च वह्न्यभाववद्धृदयभावव्याप्यव्याप्यवत्कालीनह्रदो वह्निमानित्यत्र वह्न्यभाववद्व्याप्यव्याप्यवद्धृदेऽतिव्याप्तिश्च, वह्न्यभावव्याप्यव्याप्यवान् वह्न्यभाववान् वह्न्यभावव्याप्यव्याप्यवान् तादृशो ह्रदः, घटाभावव्याप्यव्याप्यवान् घटाभाववान् घटाभावव्याप्यव्याप्यवान् तादृशो ह्रद इति निश्चयानामेकरूपेण प्रतिबन्धकत्वानुपगमेन उक्ततृतीयसम्बन्धाभावादेव वारणीया । वह्न्यभावव्याप्यव्याप्यवह्न्यभाववद्धृदो वह्निमानित्यत्रातिव्याप्तिस्तु निरुक्ततृतीयसम्बन्धाभावात् निरुक्तविशिष्टान्तराघटितत्वाभावाच्च न सम्भवति। न चैवं तृतीयसम्बन्धनिवेशे अभावविशिष्टव्यापकसामान्यस्वाभावकालीनत्वाभावव्यापकाभावकालीनत्व तादृशसाध्याभावाभाववद्वृत्तिमत्पक्षान्यान्यतरतोऽतिव्याप्तिरिति वाच्यम्, नानासम्बन्धघटितनिश्चयानामेकरूपेण प्रतिबन्धकत्वानुपगमे तादृशदोषात् । प्रतियोगिवैयधिकरण्यघटितव्याप्तिघटितवह्न्यभावव्याप्यवह्न्यभाववद्धृदो वह्निमानित्यत्रातिव्याप्तिस्तु निरुक्तविशिष्टान्तराघटितत्वाभावादेव वारणीया । वृत्तिव्यापकगगनाभावकालीनगगनवत्क्षणगगनसाध्यकस्थले उक्तातिव्याप्तिः तद्व्यवहितपूर्वोक्तातिव्याप्तिश्च उक्तविशिष्टान्तराघटितत्वाभावादेव निवारिता । इदानीं वह्निमानित्यत्र घटकालीनवह्न्यभावाभाववद्वृत्तिमत्पक्षेऽतिव्याप्तिः तत्सम्बन्धाभावादेव नास्ति । तच्छरीरे वह्न्यभावव्याप्तेरप्रवेशात् । न च तदभावव्याप्तेरप्रवेशेऽपि तन्निर्णयस्य तद्वत्ताबुद्धिविरोधित्वमावश्यकम्, अन्यथा महानसीयवह्निव्याप्यवत्तापरामर्शकाले उक्तपरामर्शे सति संशयाकारानुमितिर्दुर्वारा स्यादिति वाच्यम्, संशयाकारानुमित्यापत्तिवारणायैव कस्यचित्प्रतिबन्धकत्वावश्यकस्य कल्पनस्य कस्यचिदप्यदृष्टत्वात् । प्रकारान्तरेण प्रतिबन्धकत्वे स्थापिते सति समानविषयकत्वावच्छेदेन प्रामाण्यतया हि संशयाकारानुमितिर्निरस्ता भवति। अन्यथा "परेति"त्यादिना संशयाकारानुमितिस्थापनं ग्रन्थकृता । अन्यथा "परेति"त्यादिना संशयाकारानुमितिस्थापनं महाचार्याणामनुपपन्नं स्यात् । एतदपेक्षयैव तादृशकपिसंयोगाभावव्याप्यवत्तानिश्चयस्यापि प्रतिबन्धकत्वकल्पनसम्भवात् । एवं तादृशनिश्चयस्य मणिमन्त्रादिन्यायेन प्रतिबन्धकत्वोपगमे सामान्यलक्षणस्य पर्वतपक्षकवह्न्यभावव्याप्यवत्कस्थले पर्वतीयवह्निव्याप्यवत्पर्वतेऽतिव्याप्तिः । भवतु वा उक्तनिश्चयस्य विरोधित्वम्, तावतापि नोक्तातिव्याप्तिरवकाशमियेव

'इत्यपनिपक्षेऽपि दत्त एवातिव्याप्तिवारणसम्भवे प्रतिबन्धकतायामपि विशिष्टान्तराघटितत्वं विफलमिति वाच्यम्, प्रतियोगिवैयधिकरण्यघटितवह्न्यभावव्याप्यवह्न्यभाववद्वृत्तित्वातिव्याप्तिवारकतया तत्सार्थक्यात्। अत एव जनकतामात्रे तन्निवेशनमपि दूरोत्सारितम्। यदि च स्वरूपसम्बन्धेनैव विशेष्यत्वे जनकतायां व्यापकत्वं निवेश्य जनकत्वप्रतिबन्धकत्व उभयस्मिन् विशिष्टान्तरविषयकत्वानवच्छिन्नत्वं निवेश्यत इत्युच्यते, तदा तथा स्वैरं निवेश्यताम्, जनकतामात्रे तन्निवेशनासम्भव एव शतकोटिकृतो दूषणेषु च निर्भरात्। एवं जनकतामात्रे तथानिवेशे प्रतियोगिवैयधिकरण्यघटितवह्न्यभावाभावव्यापकीभूताभावप्रतियोगिवह्न्यभाववद्ध्रदे, एवं आधेयत्वं अभावनिरूपितत्वाभाववत् इत्यत्रावच्छेदकावच्छेदेन साध्यसिद्धिदशायां प्रतियोगिवैयधिकरण्यघटितसाध्याभावाभाववद्वृत्तित्वपक्षे चातिव्याप्तिर्दुर्वारा स्यात्।

एतेन जनकतायां प्रकृतानुमितिप्रतिबन्धकताव्याप्यत्वस्य उभयप्रकारतावच्छेदकावच्छिन्नाभाववत्ताबुद्धिप्रतिबन्धकताव्याप्यत्वस्य वा निवेशोऽपि न निस्तारः, प्रकृतानुमितिप्रतिबन्धकताव्याप्यत्वस्य जनकतायां निवेशो सत्यन्तवैयर्थ्यात्। सम्भवति सार्थक्ये वैयर्थ्यापरपर्यायतात्पर्यग्राहकत्वकल्पनाया अन्याय्यत्वात्। एवं आधेयतात्वावच्छेदेन अभावत्वनिरूपितत्वाभावसाध्यकस्थले प्रतियोगिवैयधिकरण्यघटिताभावनिरूपितत्वाभावव्यापकीभूताभावप्रतियोगि अभावत्वनिरूपितत्ववदाधेयत्वे, एवं भवो वृत्तिमत्त्विष इत्यत्र प्रतियोगिवैयधिकरण्यघटितव्यापकताघटितवृत्तित्वाव्यवच्छेदकत्वावच्छेदे चातिव्याप्तिर्दुर्वारा स्यात्। एवं यावन्तस्सम्बन्धाः प्रसिद्धाः तत्तत्सम्बन्धेन वृत्तिव्यापकवृत्तित्वाप्यप्रमेयत्वकालीनघटपक्षकवृत्तिमत्त्वेद्. साध्यकस्थले वृत्तिव्याप्यप्रमेयत्वव्याप्यवत्ताकघटे अतिव्याप्तिः, तादृशघटे वृत्तिव्याप्यप्रमेयत्वाभावबताबुद्धौ तत्तत्सम्बन्धेन वृत्तिमत्तानिश्चयस्य पृथक् पृथक् प्रतिबन्धकत्वापेक्षया यत्किञ्चित्सम्बन्धावच्छिन्नवृत्तिप्रकारकताशालिनिश्चयत्वावच्छिन्नस्य लाघवादनुगतरूपेण प्रतिबन्धकत्वोपगमेन उभयप्रकाराभाववत्ताबुद्धिप्रतिबन्धकताया एकरूपेण जनकत्वाभ्युपगमेऽपि तज्जनकताव्यापकत्वाक्षते। प्रकृतानुमितिप्रतिबन्धकताव्यापकत्वस्य च तत्र सत्त्वात् प्रतिबन्धकतायां विशिष्टान्तरविषयकत्वव्यापकत्वनिवेशमन्तरेण तदतिव्याप्तेरवारणपरिहारतया जनकतामात्रे तन्निवेशनमत्यादरायासम्भवात्।

अतोऽवधेयं सम्बन्धप्रतिबन्धकतायां पूर्वोक्तनृतीयसम्बन्धनिवेशे गगनसम्बन्धेनाभावविशिष्टव्यापकगगनाभावकालीनघटपक्षकगगनसाध्यकस्थले तादृशगगनावृत्तित्वाभाववद्वृत्तिमद्गगनेऽतिव्याप्तिः, अतो जनकतायामेव उभयप्रकाराभाववत्ताबुद्धिप्रतिबन्धकताव्याप्यत्वं निवेश्यम्, इत्थञ्च तथानिवेशे ह्रदो वह्निमानित्यत्र वह्न्यभावव्याप्यवह्न्यभाववद्ध्रदे एकरूपेण जनकत्वानभ्युपगमपक्षे वृत्तिव्या-

पक्षगगनाभावकालीनगगनपक्षकगगनसाध्यकस्थले प्रतियोगिवैयधिकरण्यघटितगगनाभावव्याप्यत्वव्याप्तिमत्त्वतादृशघटे, आधेयतात्वावच्छेदेनाभावविशिष्टरूपिताभावत्वसाध्यत्वे तादृशसाध्यवदवृत्तिमत्पक्षे, एवमन्यत्राप्यतिव्याप्ति जनकताभावे विशिष्टान्तरविषयकत्वानवच्छिन्नत्वनिवेशो सम्भवति । न च स्वावच्छेदकाभावत्वावच्छिन्नविषयतात्वसम्बन्धेन जनकताया व्याप्यत्वस्य अवच्छेदकता सम्बन्धेन प्रतिबन्धकताया व्यापकत्वविवक्षणात्रैतद्दोषावकाश इति वाच्यम्, एवमपि अव्याप्यवृत्तित्वज्ञानविरहकाले वह्न्यभावाभाववत्ताबुद्धौ वह्न्यभावव्याप्यवह्न्यभाववत्ताज्ञानस्यापि प्रतिबन्धकतया तस्याश्चावच्छेदकतासम्बन्धेन स्वावच्छेदकाभावत्वावच्छिन्नविषयतायामक्षतत्वेन तावताप्युक्तातिव्याप्तेरनिराकरणात् । न च स्वावच्छेदकाभावत्वावच्छिन्नविषयतास्वस्वरूपान्यतरसम्बन्धेन व्याप्यत्वस्य स्वरूपावच्छेदकत्वान्यतरसम्बन्धेन व्यापकत्वस्य विवक्षणेनोक्तदोष इति वाच्यम्,—एवमपि ह्रदपक्षकवह्निसाध्यकस्थले वह्न्यभावव्याप्यव्याप्यवह्न्यभाववद्ह्रदे, जल सामानाधिकरण्याभाववदित्यत्र सामानाधिकरण्यव्याप्यजलव्याप्यवत्काले चातिव्याप्ते । एवं ह्रदो वह्निमानित्यत्र जलवद्ह्रदव्याप्यवह्न्यभाववज्जलवति, साधेयतावच्छेदेन स्वरूपसम्बन्धेन वह्न्यभावयद्भावनिरूपितत्ववत्कालीनवह्निसाध्यकस्थले तादृशवह्न्यभाववद्वृत्त्यभाववदवृत्तिसदाधेयत्वे चातिव्याप्ते । यदि च प्रतिबन्धकतायां विशिष्टान्तरविषयकत्वानवच्छिन्नत्वविशेषणं दोऽपि वह्न्यभावयद्वह्न्यभावव्याप्यव्याप्यवत्कालीनह्रदपक्षकवह्निसाध्यकस्थले वह्न्यभावव्याप्यव्याप्यवत्तादृशह्रदे, एवमभावविशिष्टव्यापकसामान्यस्याभावकालीनसामान्यत्वसाध्यकस्थले तादृशसामान्यत्वाभावव्याप्यद्रव्यत्वाभाववदवृत्तिमद्घटे, एवमभावविशिष्टव्यापकगगनाभावकालीनगगनसाध्यकस्थले तादृशगगनावृत्तित्वव्याप्यतद्व्यक्तित्ववदवृत्तिमद्गगने चातिव्याप्तिवारणाय पूर्ववद्विशेष्यदलपरिष्कारस्यावश्यकत्वमाऽस्मन्मतेऽपि नोक्तदोष इत्युच्यते, तथा भवन्मते जलवद्ह्रदकालीनह्रदो वह्निमानित्यत्र वह्न्यभावव्याप्यव्याप्यवत्तादृशह्रदेऽतिव्याप्ते । प्रतिबन्धकतायां विशिष्टान्तरविषयकत्वानवच्छिन्नत्वनिवेशमन्तरेण वारणसम्भवाच । एवं जलवद्ह्रदस्थाप्यवह्न्यभाववज्जलवदादौ चोक्तातिव्याप्तेरवारणात् सत्यन्तवैयर्थ्याच्च । अस्मन्मते सेयत्वविशिष्टसत्प्रतिपक्षातिव्याप्तिवारकतयैव तत्सार्थक्यात् ॥

॥ इत्यलम् ॥

# कांच्यां—श्रीसुदर्शनमुद्रायन्त्रालये क्रय्याणि पुस्तकानि.

**वैदिक ग्रन्थाः ।**

| नं. | नाम | रु | आ |
|---|---|---|---|
| १. | श्रीसूक्तभाष्यम् | ० | २ |
| २. | पुरुषसूक्तभाष्यम् | १ | ० |
| ३. | तैत्तिरीयोपनिषद्भाष्यम् | ३ | ० |
| ४. | सन्ध्यावन्दनभाष्यम् | ० | ८ |

**वेदान्त ग्रन्थाः ।**

| नं. | नाम | रु | आ |
|---|---|---|---|
| ५. | शतदूषणी भा—१ | ४ | ६ |
| ६. | शतदूषणी भा-२ | ३ | १२ |
| ७. | शतदूषणी भा--३ | ३ | १२ |
| ८. | शतदूषणी भा-४ | ३ | १२ |
| ९. | भगवद्गीता प्रतिपदार्थविवरणसहिता | २ | २ |
| १०. | भगवद्गीता-वरवरमुनिव्याख्यासहिता | २ | ४ |
| ११ | गीतार्थसंग्रह-रक्षया सहितः | ० | ६ |
| १२. | तत्वनिर्णयः (शैववैष्णववाद) | ० | ४ |
| १३. | सिद्धान्तचिन्तामणिः | ० | १२ |
| १४. | पाराशर्यविजयः (प्रथमाध्यायप्रथमपादः) | ४ | ० |
| १५. | वेदान्तविजय. [गुरुपसदविजयः, ब्रह्मविद्याविजयः, सद्विद्याविजयः, अद्वैतावद्याविजयः, पारेकरावजयः ] | (यन्त्रस्थः) | |
| १६. | यतिलिङ्गसमर्थनम् | ० | ४ |
| १७. | प्रपन्नपारिजातः | ० | ४ |
| १८. | न्यायभास्करः (जगन्मिथ्यात्वखण्डनम्) | १ | ८ |
| १९. | भेदवादःतत्क्रतुन्याय विचारश्च | ० | ४ |
| २०. | दृश्यत्वानुमाननिरास वादःमोक्षकारणतावादश्च | ० | ४ |
| २१. | कार्याधिकरणवाद.भा१ | ० | १० |
| २२. | कार्याधिकरणवाद भा२ | १ | ० |
| २३. | कार्याधिकरणतत्वम् | ० | १४ |
| २४. | श्रीरामानुजसिद्धान्तसार. | १ | ० |
| २५. | श्रुतितात्पर्यनिर्णयः (यन्त्रस्थः) | | |

**मीमांसा ग्रन्थाः ।**

| नं. | नाम | रु | आ |
|---|---|---|---|
| २६. | भाट्टरहस्यम् | १ | ८ |
| २७. | मीमांसापादुका | ० | ५ |
| २८. | मीमांसाकौस्तुभ भा१ | १ | ४ |
| २९. | मीमांसाकौस्तुभ भा४ | १ | ६ |
| ३०. | मीमांसाकौस्तुभ भा५ | १ | ६ |
| ३१. | सेश्वरमीमांसा | १ | १४ |

**न्याय ग्रन्थाः ।**

| नं. | नाम | रु | आ |
|---|---|---|---|
| ३२. | प्रामाण्यवादः | १ | ४ |
| ३३. | अवच्छेदकत्वनिरुक्ति. | ० | १५ |

| न | नाम | रु | आ | न | नाम | रु | आ |
|---|---|---|---|---|---|---|---|
| ३४. | बाधगादाधरी | ० | १५ | ५१. | शतकोटिमण्डनम् विजयराघवाचार्यवि. | १ | ० |
| ३५. | मूलगादाधरीये शब्दखण्ड | १ | ४ | | पाञ्चरात्र ग्रन्थाः । | | |
| ३६. | उपाधिवाद गादाधरस्य | २ | ० | ५२. | सात्वतसंहिता | २ | ८ |
| | | | | ५३. | ईश्वरसंहिता | ७ | ८ |
| ३७. | गादाधरी चतुर्दशलक्षणी | १ | १४ | ५४. | पारमेश्वरसंहिता सव्याख्या | १० | ० |
| ३८. | गादाधरी पञ्चलक्षणी | ० | ८ | | सम्प्रदाय ग्रन्था । | | |
| ३९ | सिद्धान्तलक्षणम् | १ | ४ | ५५. | तत्वत्रयम् | ० | ४ |
| ४०. | पक्षता-गादाधरी | १ | ८ | ५६. | मुमुक्षुप्पडिरहस्यम् | ० | ४ |
| ४१. | व्युत्पत्तिवाद | २ | ८ | ५७. | श्रीवचनभूषणम् | ० | ८ |
| ४२ | [illegible] | ౧ | ౦ | ५८. | श्रीवादिभीकरवैभवम् [सचित्रम्] | ० | ६ |
| ४३. | सामान्यनिरुक्ति | ० | १२ | ५९. | श्रीवादिभीकरवैभवम् [चित्ररहितम्] | ० | ४ |
| ४४. | पदवाक्यरत्नाकर | २ | ८ | ६० | [illegible] | 0 | 6 |
| ४५ | సాధారణాసాధారణ [illegible] గ్రంథ | ౧ | ౦ | ౬౧. | [illegible] | ౦ | ౨ |
| ४६ | तत्त्वचिन्तामणौ अवयवग्रन्थ | १ | ० | 62 | [illegible] | 0 | 4 |
| ४७ | सत्प्रतिपक्षग्रन्थ | ० | १४ | ౬3. | [illegible] | ౦ | ౨ |
| ४८. | शतकोटि | ० | ६ | ౬౪. | [illegible] | ౦ | ౧౨ |
| ४९ | शतकोटिखण्डनम् अाकृष्णतातार्य वि. | ० | ६ | 65 | [illegible] | 1 | 8 |
| ५०. | शतकोटिखण्डनम् श्रीमदनन्तार्यप्रवर्यकृ. | ० | १२ | 66 | [illegible] | 0 | 2 |
| | | | | 67 | [illegible] | [illegible] | |
| | | | | 68 | [illegible] | ,, | |
| | | | | 69 | [illegible] | 0 | 2 |
| | | | | 70, | [illegible] | 0 | 2 |